सोऽपि तं वलितग्रीवः[1] क्षणं स्थित्वा ददर्श च[2] ।
निरन्तरलतापुञ्जं[3] विन्ध्यकुञ्जं[4] विवेश च ॥३५॥
ततस्तुरग[5]मुत्सृज्य विसृज्यानु[6]प्लवानपि ।
तमन्वियाय[7] सारङ्गं सारङ्गायतलोचनः ॥३६॥
देवो रमाङ्गदेनाथ स[8] श्रियेवान्वगम्यत ।
छाया निवर्तते[9] जातु न तु तस्यैष[10] भूपतेः ॥३७॥
मृगानुसारी[11] विचरन्नात्तचापो वने वने ।
लीलां किरातवेषस्य[12] स प्रपेदे पिनाकिनः ॥३८॥
दूरादेव स तेनाथ शरव्यत्व[13]मनीयत ।
स्वनामधेयचिह्नस्य हेमपुङ्खस्य पत्रिणः ॥३९॥
शिलाभेद[14]क्षमेणापि[15] किमपि[16] श्लथमुष्टिना ।
अभूद्विद्धः स सारङ्गः तेन क्वचि[17]न्न मर्मणि ॥४०॥
स शरापातभीतेन मनसोऽप्यतिरंहसा ।
अतिदूरं कुरङ्गेण निन्ये राम इवापरः ॥४१॥

---

१. B. reads °ग्रीवं for °ग्रीवः. २. K. reads ह for च. ३. I. reads °गुञ्जं (च्छ?) for° पुञ्जं and K. °कुञ्जं for the same. ४. K. reads °भागं for °कुञ्जं. ५. T. and Tr. read तुरङ्ग° for तुरग° ; while Tr. substitutes °मुन्मुच्य for °मुत्सृज्य. ६. K. reads °नुचरान् for °नुप्लवान् ; while I. substitutes °नसृज्य विप्लवान् ७. T. reads °नन्वियाय च for तमन्वियाय. ८. T. reads सन्निवेन and T. संजयेव for स श्रियेव. ९. B. and I. read ऽतिवर्तते for निवर्तते. १०. T. reads तस्यैव for तस्यैष and K. तस्य च for the same. ११. T. reads °चारी for °सारी. १२. I. reads किलातवेशस्य for किरातवेषस्य. This is not a reading. Writers of the Northern Part of India do not make any difference between श, ष and स् and generally use any of these letters for each of the two others. Also there is no difference between र् and ल्. १३. K. reads मृगो लक्ष्य° for शरव्यत्व°. १४. K. reads गिरिभेद° for शिलाभेद°. . १५. B. reads °नाथ for °नापि. १६. K. reads निक्रामं for किमपि. १७. Tr. reads कचन for क्वचि न and अभूतविद्धः for अभूद्विद्धः स.

तेन विन्ध्याटवीमध्ये धावन्नीरन्ध्रवीरुधि ।
उत्पतन्नुत्पतन्नेव[1] स केवलमलक्ष्यत[2] ॥४२॥

दृशा वनस्थलीः कुर्वन् विकीर्णेन्दीवरा इव ।
जवाद्दूरमतिक्रान्तं तं क्षितीशस्तदैक्षत[3] ॥४३॥

ततस्तिरोहिते तस्मिन्नसमाप्तकुतूहलः ।
स्वर्बाण[4] इव स[5] प्राप पृथिवीं दुर्विलक्षताम्[6] ॥४४॥

दशनज्योत्स्नया कुर्वन् लताः स्तबकिता इव ।
इति पार्श्वगतं[7] स्मित्वा स जगाद रमाङ्गदम् ॥४५॥

रमाङ्गदाय मृगवर्णनम् ।

अयं[8] तुलितपौलोमीकान्तकार्मुकविग्रहः[9] ।
मृगो दृग्गोचरं कश्चिद्[10] गतस्तव रमाङ्गद[11] ! ॥४६॥

तद्वधू[12]स्वकरन्यस्तचित्रपत्रलताङ्कितः ।
असौ विहारहरिणः किं स्यादनलसारथेः[13] ॥४७॥

---

१. T. reads उत्फलन्नुत्फुलन्नेव for उत्पतन्नुत्पतन्नेव ; while Tr. उत्पलानुप्लवैरेव and I. उत्पलन्नुत्पलन्नेव for the same. २. K. reads दूरात्समलक्ष्यत for केवलमलक्ष्यत. ३. B. reads क्षितीशस्तमथैक्षत, Tr. तं क्षितीश उदीक्षत for तं क्षितीशस्तदैक्षत. ४. I find in the Manuscript I. स्वपाण in the place of स्वर्बाण, but it seems to be a mistake of the writer. ५. T. and K. read सम्प्राप for स प्राप. ६. T. and I. read °विलक्ष्यताम् for °विलक्षताम्. ७. B. reads पार्श्वे for पार्श्व° and B. T. and Tr. स्थित्वा and I. दृष्ट्वा for स्मित्वा. ८. In the margin of B. the reading स्वयं is found for अयं ; while K. reads सोऽयं and T. अहं, but T.'s reading seems to be a mistake. ९. I. and T. read °विभ्रमः and Tr. for °विग्रहः. १०. K. reads किंस्वित् ; while I. reads काश्चित् which does not seem to be applicable in the case of the reading अयं. If the reading स्वयं is taken for अयं then the reading काश्चित् will have a good sense. ११. I. reads रमाङ्गदः for रमाङ्गद through mistake. १२. K. reads स्वर्वधूः for तद्वधू°. १३. Tr. reads अनिलसारथेः for अनलसारथेः.

अपि दृष्टा त्वयैतस्य कण्ठे कनकशृङ्खला?[1] ।
छुरितस्येन्द्रचापेन मेघस्येव तडिल्लता ॥४८॥
मृगजातिरपूर्वेयं सर्वथा वसुधातले ।
सम्भवत्यमराद्रौ वा भुवने वा फणाभृताम् ॥४९॥
अस्याखण्डलकोदण्डकान्ति चर्मातिपावनम् ।
गजपृष्ठे निधास्यामि[2] महासमरपर्वसु[3] ॥५०॥
यन्निमज्जति मच्चेतः कुतूहलरसोर्मिषु ।
मार्गमन्वेष्टुमेतस्य तदेहि प्रयतावहे ॥५१॥
इत्युक्त्वा विरते तस्मिन् परमारमहीभृति ।
ऊचे[4] रमाङ्गदेनैवमवाप्यावसरं वचः ॥५२॥

रमाङ्गदकृतो मृगानुसरणनिषेधः ।

क्रुधेवा[5]धिज्यचापेन वर्णसङ्करदर्शिना[6] ।
त्वयैष[7] चित्रसारङ्गो देव दूरमनुद्रुतः ॥ ५३ ॥
अमून्याः[8] सुर-गन्धर्व-सिद्ध-विद्याधरोरगैः ।
इमा नवनवाश्चर्यनिधयो[9] विन्ध्यभूमयः ॥५४ ॥
विरमात्यादरः[10] कोऽयं कुरङ्गान्वेषणे तव[11] ।
न धावन्त्यर्थरिक्तासु क्रियासु त्वादृशां धियः ॥५५॥

---

१. K. reads °मेखला for °शृङ्खला. २. B. reads विधास्यामि for निधास्यामि. ३. B. reads °मूर्धसु for °पर्वसु. ४. I. substitutes जगदे and B. जगे for ऊचे. the first reading is out of matrical rules. ५. Tr. reads त्वयैवा° for क्रुधेवा°, but it does not convey proper sense, and is also incorrect. ६. K. reads °भङ्गिना for °दर्शिना. ७. K. reads त्वयैव for त्वयैष and substitutes अनुसृतः for अनुद्रुतः. ८. I. reads अमून्याः स्वपुरावूर्ध्व ×, T. अमून्याश्च पुरावूर्ध्व° for अमून्याः सुर-गन्धर्व°; while Tr. mutilates two letters and reads अनु -- पुरावूर्ध्व for the same. ९. K. reads °न्विभिता for °निधयो. १०. B. and K. read विरमत्वादरः for विरमात्यादरः. I. follows our reading, but there appears corrections विरमत्या (त्वा?) दरः. ११. K. reads विभो for तव.

मृगयासक्तचित्तस्य तवात्र विचरिष्यतः ।
पथि लोचनयोरेष पुनरप्यापतिष्यति[1] ॥ ५६ ॥
शरः संह्रियतामेष[2] धनुरप्यवतार्यताम् ।
शेषा च[3] स्वस्तिमत्यस्तु देव[4] श्वापदसन्ततिः ॥५७॥
दशा दिनस्य तीव्रेयं यदयं भगवान् रविः ।
कृष्णस्योरसि[5] पुष्णाति नभसः कौस्तुभश्रियम् ॥५८॥
निहतेषु त्वया देव सत्त्वेषु व्यथिता इव ।
एता वहन्ति सन्तापमतीवारण्यभूमयः[6] ॥ ५९ ॥
अमीभिर्वानीर[7]विटपेष्वगतक्लमैः[8] ।
कपिञ्जलैरितः पश्य सहसैव निलीयते[9] ॥ ६० ॥
अर्कांशुग्लपितैरेभिरिमो ऽप्यालिखितैरिव ।
राजजम्बू[10]निकुञ्जेषु पश्य पुंस्कोकिलैः स्थितम् ॥६१॥
आल्हादहेतुः स्निग्धेयमितो वन्येन[11] दन्तिना ।
पश्य नीपतरोश्छाया[12] सवशेन निषेव्यते ॥ ६२ ॥
नवाम्बुधरनीलोऽयं दाव[13]धूमलतोद्गमः ।
नीलकण्ठैरितस्तर्षात्[14]सोत्कण्ठैरवलोक्यते ॥ ६३ ॥

---

१. K. reads कशाञ्चित्पुनरेष्यति for पुनरप्यापतिष्यति. २. I. reads संहृयतां for संह्रियतां through mistake. ३. I. reads शेषास्तु and T. शेषाश्च both for शेषा च. ४. K. reads गिरि° for देव. ५. K. reads श्रीकृष्णस्येव for कृष्णस्योरसि. ६. K. reads °मिव विन्ध्यस्य भूमयः for °मतीवारण्यभूमयः. ७. B. reads °नीवार° for °वानीर°. ८. K. reads °विटपेषु कृतश्रमैः, T. विटपेषु पटुक्रमैः and I. विटपेषु पतत्क्रमैः all for °विटपेष्वगतक्लमैः; while Tr. °विटपेषु वरक्रमैः for the same. ९. B. and K. read विलीयते for निलीयते. १०. B. and K. read राजन् जम्बू° for राजजम्बू°. ११. Tr. reads मन्ये न for वन्येन, but corrects मत्तेन ; while K. वैन्ध्येन for the same. १२. B. reads °तरुच्छाया for °तरोश्छाया. १३. B. and Tr. read दव° for दाव°, but the name दव belongs to forest. १४. Tr. reads °स्तोषात् K. °स्तो वेगात् for °स्तर्षात्. I. is quite mistaken here. I cannot find its reading properly सूषंद्र these three letters are in the place of तर्षात्सो; while. T. substitutes उत्कण्ठैः for सोत्कण्ठैः and I. अवलोक्यते for अवलोक्यते through mistake.

अनया विद्रुमस्तम्ब[1]भङ्गपिङ्गलया दृशा ।
इतः[2] पल्वलपङ्कान्तर्व्यक्तिमभ्येति सैरिभः ॥ ६४ ॥

कठोरातपतप्तस्य राजहंसस्य सम्प्रति ।
नरेन्द्र नलिनीपत्रमातपत्री[3]भवत्यदः ॥ ६५ ॥

[4]मुखमश्वरजच्छन्नकपोलफलकद्युति ।
देव दन्तुरयन्त्येते[5] तवापि स्वेदबिन्दवः[6] ॥ ६६ ॥

[7]तदत्र कुसुमस्मेरे निःस्वनत्समदालिनि ।
विनीयतां लताकुञ्जे त्वयैष[8] मृगयाश्रमः ॥ ६७ ॥

[9]अपि स्वच्छजला देव[10] कलहंसाङ्कसैकता[11] ॥
वराहोत्खात[12]मृत्स्नेयं पुरः[13] पुष्करिणी तव ॥ ६८ ॥

[14]त्वामिवार्ककरक्रान्तमाकारयितुमेतया ।
अयमाधूतकह्लारकालिकः[15] प्रेषितो[16]ऽनिलः ॥ ६९ ॥

लतापुष्पोत्करैः[17] कीर्णो मार्गोऽयमवगाह्यताम् ।
इतो वन्येभमुक्ताभि[18]रिमाः शर्करिला[19] भुवः ॥ ७० ॥



---

१. K. reads °प्रख्य° for °स्तम्ब°. २. Tr. reads मह्रा° for इतः. ३. Tr. reads आतपत्रं for आतपत्री°; while B. substitutes °भविष्यति for °भवत्यदः. ४. B. reads मुखं मधुरजच्छन्न° and Tr. जम्बुमह्रारिजच्छन्न° for मुखमश्वरजच्छन्न°, but it does not give any good meaning; while T. substitutes °चिह्न° for °च्छन्न° and °छलक° for °फलक.° ५. K. reads भङ्गुरयन्ति for दन्तुरयन्ति. ६. Tr. and K. read °विप्रुषः for °बिन्दवः. ७. B. reads देवाऽत्र for तदत्र; while K. कुसुमस्मेरनिःस्वनत्° for कुसुमस्मेरे निःस्वनत्°. ८. K. reads एव for एष and corrects in the margin त्वया किं. ९. K. reads अयि and T. अति° for अपि. १०. K. reads भाति for देव. ११. I. reads °सौकता for °सैकता, but it seems to be incorrect. १२. I. reads वराहोत्तान्° for वराहोत्खात°. १३. K. reads विन्ध्या° for पुरः and न किम् for तव. १४. I. reads त्वामेव for त्वामिव. १५. Tr. and K. read °कमलः for °कालिकः while T. substitutes उद्धूत° for आधूत°. १६. Tr. reads प्रहितो for प्रेषितो. १७. K. reads °पुष्पोद्गमैः for °पुष्पोत्करैः. १८. Tr. reads °मुक्तालि° for °मुक्ताभि°. १९. K. reads शर्करिता for शर्करिला.

इत्युक्ते मसृणं तेन नृपस्य[1] पदमादधे ।
स्मितं सरस्वतीरत्नपर्यङ्के[2] दन्तवाससि ॥ ७१ ॥

यशोभटोपदिष्टेन[3] गत्वा किञ्चिदिवाध्वना ।
प्राप[4] पुष्करिणीतीरमवन्तितिलको[5]ऽथ सः ॥ ७२ ॥

करादनुचरस्तस्य[6] सान्द्रस्वेदजलाङ्कुलेः ।
मधुर्मनोभवस्येव सशरं चापमाददे ॥ ७३ ॥

अथ स्नानादिवर्णनम् ।

ततः स्नानेच्छया स्पृष्टो विसृष्टश्यामकञ्चुकः[7] ।
स रेजे मेघनिर्मुक्तः[8] पर्याप्त[9] इव चन्द्रमाः[10] ॥ ७४ ॥

प्रमृष्टमृगयारेणु तन्मुखं पार्श्ववर्तिना ।
रुरुचे मारुताक्षिप्त[11]परागमिव पङ्कजम् ॥ ७५ ॥

निसर्गललिता तस्य विमुक्तालङ्कृतिस्तनुः ।
लतेव पारिजातस्य पर्यस्त[12]स्तबकाऽभवत् ॥ ७६ ॥

स्वेदभिन्नाङ्गरागः स[13] सरसीं तामगाहत[14] ।
मदसिक्त[15]तटाघातधूलिर्वन्य इव द्विपः ॥ ७७ ॥

---

१. I. reads नृपतेः for नृपस्य. २. B. and I. read °सत्यपर्यङ्के, K. °सुप्तपर्यङ्के and Tr. °सुप्ते पर्यङ्के all for °रत्नपर्यङ्के. ३. B. reads रमाङ्कशोप° for यशोभटोप°. ४. K. reads प्रापत् for प्राप. ५. Tr. reads अवनीतिलको for अवन्तितिलको. ६. K. reads चिरात् for करात्; while T. वनचरः for अनुचरः. ७. Tr. reads °कंकटः for °कञ्चुकः. ८. I am unable to find out the correct reading of T. here. It reads सारोजन्मेघनिर्मुक्तः then again corrects सरजन्मेघविनिर्मुक्तः, but this and correction seem to be incorrect. ९. T. reads पर्यन्त for पर्याप्त. १०. K. reads पूषणः for चन्द्रमाः. ११. K. reads मारुतोद्धूत°, Tr. मरुदाक्षिप्त° and T. मरुताक्षिप्त° all for मारुताक्षिप्त°. १२. T. reads पर्यन्त° for पर्यस्त°; while Tr. °भात् for ऽभवत्. १३. Tr. reads प्रस्वेदाभिन्नाङ्गरजास् for स्वेदभिन्नाङ्गरागः स. १४. K. reads this stanza as follows :—

स्वेदनुन्नाङ्गवर्णस्य सरसीमवगाहतः ।
वन्यस्येवाभवत्तस्य श्रीःपर्यन्तविसर्पिणी ॥.

१५. T. reads उदसिक्त° for मदसिक्त°.

स तस्यां दूरविक्षिप्त[1]विह[2]गश्रेणिमेखलः ।
विजहार यथाकामं विलासकुसुमायुधः ॥ ७८ ॥
उवाह वि[3]स्फुरन्नालकण्टकच्छद्मनापि सा ।
[4]तदङ्गयष्टिस्पर्शेन रोमाञ्चमिव पद्मिनी ॥ ७९ ॥
ततस्त[5]रङ्गनिर्धौतमध्यास्य स शिलातलम् ।
यशः[6]स्नपितदिक्सीमा देवः सस्नौ यथा[7]विधि ॥ ८० ॥
तस्यां [8]ऽविरलमत्तालिनिःस्वनच्छद्मना वने ।
अगीयतेव देवस्य लताभिः स्नान[9]मङ्गलम् ॥ ८१ ॥
स[10] दूरोदस्तपर्यस्तसपुष्पसलिलाञ्जलिः ।
जगत्तमोपहं ज्योतिस्त्रयीमयमुपस्थितः[11] ॥ ८२ ॥
तमानर्च स राजेन्दुर्मौलौ यस्येन्दुलेखया ।
क्रियते स्वर्धुनीबालमृणालशकलभ्रमः ॥ ८३ ॥
धन्या हि ता[12] वनलता यत्फलान्याजहार सः ।
कार्यतः सदृशी तासां[13] समुद्ररशना मही ॥ ८४ ॥
निपीय निखिलव्यक्तराजचिह्नेन पाणिना ।
उपा[14]स्पृशत्स चाम्भोजकिञ्जल्ककपिशं पयः ॥ ८५ ॥

---

१. T. and I. read दूरनिक्षिप्त° for दूरविक्षिप्त° and Tr. reads प्रसभाक्षिप्त° for the same. It gives another reading रभसा क्षिप्त°; while T. substitutes तस्याः for तस्यां. २. K. reads °श्रोणि° for °श्रेणि°. ३. I. reads विलसत्° for विस्फुरत्°; while B. reads this line, thus—

उवाह निबिडं नालकण्टकच्छलतोऽथ सा ।.

४. B. reads तरङ्ग° for तरङ्ग°. ५. I. and K. read तदम्बु° for तरङ्ग°. ६. I. reads °सीमित° for °स्नपित°; while Tr. °देहोऽयं for °दिक्सिमा and mutilates two letters next. ७. T. reads यथाविधे for यथाविधि. ८. B. reads तस्यां विरल° for तस्या ऽविरल°. ९. K. reads °कौतुकम् for °मङ्गलम्. १०. Tr. reads अदूरो° for स दूरो°; while K. reads दूरापास्त° for दूरोदस्त°. ११. K. reads उपास्थितः and T. Tr. and I. read उपास्थित for उपस्थितः. १२. Tr. reads सा for ता. १३. Tr. reads तस्य for तासां. १४. B. reads उपस्पृशत् for उपाऽस्पृशत्.

नी[1]लोतपत्रमित्रेण पत्रेणाम्बुजिनीभुवा[2] ।
निवारितोष्णः सश्रीकं लताकुञ्जं[3] जगाम सः ॥ ८६ ॥

सपरागे विशश्राम कुसुमप्रस्तरे च[4] सः ।
लक्ष्मीकुचाङ्गरागेण भिन्ने शेषे[5] इवाच्युतः ॥ ८७ ॥

रमाङ्गदोऽपि निर्वर्त्य[6] त्वरया किञ्चिदाह्निकम्[7] ।
अवाप्तसेवावसरः पर्युपास्त विशाम्पतिम् ॥ ८८ ॥

स भृङ्गध्वनिना सुप्तो[8] विपञ्चीनादबन्धुना ।
तमालपल्लवैस्तेन किञ्चित्किञ्चिदवीज्यत ॥ ८९ ॥

निद्रागृहीतनिर्मुक्तलोचनोऽथ[9] जहार सः ।
घ[10]नच्छायावृतव्यक्तभास्वतो नभसः श्रियम् ॥ ९० ॥

पीनांसतट[11]संश्लिष्टपुष्पकेसरशोभिना ।
उ[12]षःसाकल्पकेनेव शयनीयममुच्यत ॥ ९१ ॥

पुनर्मृगयाविहारः ।

चकार च पदं चित्रः स मृगस्तस्य चेतसि ।
लग्नं हि किमपि क्वापि कृच्छ्रादाकृष्यते मनः[13] ॥ ९२ ॥

---

१. B. reads लीला° for नीला°. २. K. Tr. T. and I. read अम्भोजिनीभुवा for अम्बुजिनीभुवा. ३. I. reads °गुञ्जं for °कुञ्जं; while Tr. reads वारितोष्णांशुसश्रीको and T. वारीवोष्णीषकः श्रीमत् for निवारितोष्णः सश्रीकं. ४. Tr. gives another reading ऽथ for च; while B. substitutes ऽपि for the same. ५. B. and K. read भिन्नशेष for भिन्ने शेष. ६. T. reads निस्यत्वात् for निर्वर्त्य. ७. K. reads किञ्चिदात्मनः for किञ्चिदाह्निकम्. ८. T. reads सुष्टो for सुप्तो; while B. सुप्तविपञ्ची° for सुप्तो विपञ्ची°. ९. Tr. reads ऽनु° for ऽथ. १०. B. reads घनच्छायवृतस्यक्ततारस्य, T. घनच्छायाभृतस्यक्ततारस्य and K. and Tr. घनच्छायावृतस्यक्ततारस्य all for घनच्छायावृतव्यक्तभास्वतो. ११. B. T. Tr. and I. read °सन्दष्ट° for °संश्लिष्ट°. १२. Tr. reads केसराकल्पकेनेव for उषःसाकल्पकेनेव and B. K. and T. read तेन for उषः°. १३. T. reads मनुः for मनः through mistake.

प्रसादहृद्यालङ्कारैस्तेन मूर्तिरभूष्यत[1] ।
अत्युज्ज्वलैः कवीन्द्रेण कालिदासेन[2] वागिव ॥ ९३ ॥

[3]जगाहे स महारण्यमंसासक्तधनुर्लतः[4] ।
उपोढ[5]शशभृल्लेखः सायमेऽब्धिमिवा[6]र्यमा ॥ ९४ ॥

तस्मिन्कुसुम[7]किर्मीरतले च[8] विचचार सः ।
स्फुरन्[9]नक्षत्रशबले नभसीव निशाकरः ॥ ९५ ॥

मृगानुगमनिर्बन्धो न जगामाऽस्य[10] मन्दताम् ।
मैथिलीरमणस्येव विपिने पृथिवीपतेः[11] ॥ ९६ ॥

निशातिक्रमणम् ।

ततः पपात जलधौ विरोचनफणामणिः ।
दिनाहे[12]र्नीयमानस्य बलात्कारगरुत्मता ॥ ९७ ॥

शनैः शनैरथ[13] व्योम्नि मृगाङ्कः पदमादधे ।
सशङ्क इव भूपालान्मृगयासक्तचेतसः ॥ ९८ ॥

रमाङ्गदास्तृतास्निग्धपल्लवप्रस्तरे ततः ।
वने राजेन्दुना निन्ये तेनेन्दुतिलका निशा[14] ॥ ९९ ॥

---

१. I. reads °रपुष्यत for °रभूष्यत; while T. and Tr. do not insert this whole stanza—

प्रसादहृद्यालङ्कारैस्तेन मूर्तिरभूष्यत ।
अत्युज्ज्वलैः कवीन्द्रेण कालिदासेन वागिव ॥.

२. B. reads कालिदासस्य for कालिदासेन and K. कवीन्द्रस्य कालिदासस्य for कवीन्द्रेण कालिदासेन. ३. K. and B. read जगाह च for जगाहे स; while B. substitutes तदा° for महा°. ४. T. and I. read आत्तानतधनुर्लतः, Tr. आत्तातनधनुर्लतः for अंसासक्तधनुर्लतः. ५. T. Tr. and I. read पयोढ° for उपोढ°; while B. substitutes °शशि° for °शश° through mistake. ६. B. reads अर्चिमिव for अब्धिमिव. ७. T. mutilates five next letters from कु°. ८. K. reads किं विजहार for च विचचार. ९. B. and K. read स्फुटनक्षत्र° for स्फुरन्नक्षत्र°. १०. K. reads ऽणुं मन्दताम् for ऽस्य मन्दताम्. ११. K. reads दण्डकाह्वये for पृथिवीपतेः. १२. T. reads दिनाभे° for दिनाहे°, but it seems incorrect. १३. K. reads °रथो and T. °रधो for °रथ. १४. T. mutilates तेनेन्दुतिलका निशा.

अथ मुखरखगापनीतनिद्रः[1]
क्वचिदपि पद्मसरस्युपास्य सन्ध्याम् ।
पुनरपि तमवेक्षितुं वनान्ते[2]
नृपतिरियेष मृगं मृगेन्द्रकल्पः ॥ १०० ॥

पञ्चैकेन स्मर इव शरान्पाणिना[3] हेमपुङ्खान्
अन्येनोर्वीविजयि च धनुः साहसाङ्कं दधानः ।
देवः सोऽथ[4] व्यहरदरिषु न्यस्तपादः[5] पिकाली-[6]
नीडन्यञ्चन्निचुलनिचयश्यामलासु[7] स्थलीषु ॥ १०१ ॥

इति[8] श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये[9] चित्रमृगावलोकनो नाम द्वितीयः सर्गः ॥ २ ॥

---

१. T. reads °वनीत° for °पनीत°. २. Tr. reads च समीक्षितुं for तमवेक्षितुं ; while B. and K. substitute निशान्ते for वनान्ते. ३. Tr. reads पञ्चिणो for पाणिना. ४. The letters ऽथ व्यहरदरिषु are mutilated in Tr. ५. T. and I. read अरयन्न्यस्तपादः for अरिषु न्यस्तपादः ; while T. substitutes व्यभरत् for व्यहरत्. ६. T. reads किकालिः for पिकाली° and नीडन्यञ्चं for °नीडन्यञ्चत्°. ७. Tr. reads °मिलय° for °निचय° and K. substitutes °श्यामलीषु for °श्यामलासु. ८. B. and K. substitute only द्वितीयः सर्गः for these lines; while T. Tr. and I. omit श्री and Tr. reads परिमलकृतौ for परिमलापरनाम्नः पद्मगुप्तस्य कृतौ ; while I. substitutes only परिमलस्य for the same and T. परिमलापरनाम्नो महाकवेः कालिदासस्य कृतौ साहसाङ्कचरिते महाकाव्ये, and omits पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते. ९. Tr. and I. omit महाकाव्ये.

# अथ तृतीयः सर्गः ।



अथ बहु चरतो ऽस्य चापपाणेर्
चकित[1]वलन्मृगयूथवीक्षितस्य ।
[2]वनभुवि सुलभः परिश्रमो ऽभूत्
न तु हरिणः स हतेन्द्रचापशोभः ॥ १ ॥
धनुषि [3]तनुभरं निधाय किञ्चित्
तरुणतमालवने [4]विनीतखेदः ।
मृगरुधिर[5]लवाङ्कितेन देवः
सम-विषमेण पथा [6]पुरः प्रतस्थे ॥ २ ॥

विन्ध्यकन्दरप्रवेशः ।

अथ स [7]चटुलषट्पदोपगीतं
वनगजदानसुगन्धिगन्धवाहम् ।
परिसरम[8]भिनृत्तनीलकण्ठं
न्यविशत विन्ध्यनगेन्द्र[9]कन्दरस्य ॥ ३ ॥
[10]चतुरंकृतकचग्रहः स गच्छन्
वनलतया परिहासलोलयेव ।

---

१. Tr. reads °लसन्° for °वलन्°; while T. °वलयं for the same; but it seems to be incorrect. २. K. reads गिरिभुवि सुलभस्तमःश्रमो ऽभूत् for वनभुवि सुलभः परिश्रमो ऽभूत्. ३. T. reads तनुहरन् for तनुभरं. ४. I. reads परीत° for विनीत° and T. ऽपनीत° for the same. ५. B. and K. read °कलाङ्कितेन for °लवाङ्कितेन. ६. B. and Tr. substitute पुनः for पुरः. ७. Tr. and K. read सरल° for चटुल°. ८. I follow here only B.; while K. T. and I. read अवनीत° for अभिनृत्त° and Tr. अविनीत° for the same. ९. K. reads °कन्धरस्य for °कन्दरस्य. १०. K. reads चटुल° for चतुर°.

नरपतिरवशः कृतः स कामं
वियति मुखेन्दुमुदञ्चयाञ्चकार ॥ ४ ॥

नमदवनिपतिः पतिः प्रजानाम्
अयि! चपले नु विकृष्यते कचेषु ।
विरम मुहुरितीव मञ्जुमुक्त-
ध्वनिभिरसावलिभिर्लताऽभ्यधायि ॥ ५ ॥

कतिचिदलिनिपीतधूपगन्धान्
अनतिविलम्बिपरार्ध्यमौलिरत्नान् ।
त्वरितमथ रमाङ्गदोऽस्य केशान्
विपिनलताविटपान्तराच्चकर्ष ॥ ६ ॥

हंसदर्शनम् ।

नृपतिरथ तदोन्मुखभ्रमन्तम्
झटिति सितच्छदमम्बरे ददर्श ।
दधतमधिगतां कुतोऽपि चञ्च्वा
बिसलतिकामिव तारहारलेखाम् ॥ ७ ॥

---

१. Tr. reads °रवशं for °रवशः. २. Tr. and I. read कृतः प्रकाशं and T. कृतः प्रकामं both for कृतः स कामं. ३. T. reads विजयति for वियति, but probably this is a writer's mistake, the letter ज is added more. ४. T. and Tr. read अपि for अयि; while I. T. and Tr. read चपले न विकृष्यते and B. चपले विनिकृष्यते for चपले नु विकृष्यते. In Tr. नु appears in the marginal correction. ५. K. reads °गुञ्जद्ध्वनिभिः for °मुक्तध्वनिभिः. ६. B. and K. read °धूम°, but in the marginal correction of B. there appears °प° for °म°; while T. reads °धूत° for the same. ७. B. reads in the margin °विलम्ब्य for °विलम्बि°. ८. B. reads निरास for चकर्ष. ९. K. T. Tr. and I. read °रपि for °स्य. १०. B. T. and I. read तथो° for तदो°. ११. K. reads °मिति for °मिव and substitutes रत्न° for तार°.

विकसितकुमुदच्छदावदाते
ततनिभृते पततां ततीर्दधानम् ।
विरचयितुमुपायनं नृपेन्दोर्
नवघटिते इव दन्तपत्रलेखे ॥ ८ ॥

चितमतनु विसर्पता समन्तात्
किरणलतानिकरेण हारयष्टेः ।
सितमणिमयसूचिनिर्मितस्य
स्थितमिव जङ्गमपञ्जरस्य मध्ये ॥ ९ ॥

तरलमणिरुचाऽऽवृतं प्रकृत्या
विदलितविद्रुमकन्दकाञ्चितुण्डम् ।
प्रणयनिहितपादयावकाङ्कम्
कमलवनस्थितिलोलयेव लक्ष्म्या ॥ १० ॥

चरणयुगतले विभातकाल-
स्फुटितजपाकुसुमाभिताम्रभासि ।

---

१. B. K. and T. read °कुसुम° for °कुमुद°. Tr. also reads the same, but corrects °कुमुद°. २. Tr. mutilates two letters and the copyist has inserted in blue ink शिवि and thereby its reading may be शिवि पक्षती for पततां ततीः; while K. reads ततीर् and T. ततिं for ततीः. ३. I. and B. read द्युसिन्धोर् and K. and T. द्युसन्धौ for नृपेन्दोर्. ४. T. Tr. and I. read °माले for °लेखे. ५. T. reads विततमतनु for चितमतनु. ६. K. reads निर्जल° for जङ्गम°. ७. B. and T. read सरलमनु च बिभ्रतं and I. सरलमणु च बिभ्रतं for तरलमणिरुचाऽऽवृतं. ८. B. reads °कान्तिकाण्डम्, K. °कान्तिखण्डम्, T. °कान्तिमण्डम् and Tr. °कान्तितुण्डम् all for काञ्चितुण्डम्. ९. T. reads °निगित° for °निहित°; while the original reading of Tr. is quite difficult to find out. Eight letters are mutilated from प्रणय°, and there are inserted those letters in blue ink निहितपादया कृताङ्क् therefore its reading may be निहितपादया कृताङ्कम्. १०. K. reads °लीलयेव for °लोलयेव. ११. Tr. reads °राम° for °ताम्र° and B. K. °ऽतिताम्र° for °ऽभिताम्र°.

स्वयमिव नलिनीवनप्र[1]सूतेः
परिचयतः कृतकान्तिसंविभागम्[2] ॥ ११ ॥
प्रतिप[3]दमतिदीर्घहारभारात्
अवनमदुन्नमयन्तमुत्तमाङ्गम्[4] ।
शिरसि निपततो[5] निकाममुष्णान्
अहिमरुचः किरणानिवोत्क्षिपन्तम्[6] ॥ १२ ॥
विवृतमुखधृतस्य निष्पतद्भिस्
तरल[7]मणेररुणस्य कान्तिलेशैः ।
अविरतमरविन्द[8]वृन्दपीतान्
मधुपृषतानिव भूयसो[9]द्वमन्तम् ॥ १३ ॥
परिख[10]चितमयत्नपूरिताशैर्
अविरलमौक्तिकदामरश्मिजालैः ।
यश इव परभूभृतां निरुध्य
प्रसभमुपाहृत[11]मात्मनो यशोभिः ॥ १४ ॥
अभिनवबिसशङ्कयाऽपहृत्यै
स्फटिकमयीम[12]समक्षमक्षमालाम् ।

१. Tr. mutilates two letters from °प्र°; while B. and K. read °प्रसूनैः for °प्रसूतेः. २. K. reads °सन्निपातम् for °संविभागम्. ३. T. and I. read °कल° for °पद°; while B. gives the same reading in the margin. ४. The reading of I. is obscure. It reads °वनतमुदुन्नमयमूमुत्तमाङ्गम् and some letters are struck off. ५. B. and I. read निपतितां for निपततो. ६. B. Tr. and I. read °निव क्षिप्तम् for °निवोत्क्षिपन्तम्. ७. I. reads तरलमणेव कणस्य कान्तिरत्नैः for तरलमणेररुणस्य कान्तिलेशैः, but it seems to be incorrect. ८. T. mutilates two letters after अरविन्द°. ९. T. reads भूयसोऽवमन्तम्, I. भूयसा वमन्तम्, B. भूयसाऽवसन्तम्, but gives marginal correction भूयसा वमन्तम् all for भूयसोद्वमन्तम्. १०. B. K. read परिकलित°, I. परिकरित° and Tr. आधिकाचित° all for परिखचित°. ११. B. reads उपाहत°, T. Tr. and I. उपाहित° all for उपाहृत°. १२. I. reads °समपक्ष° for °मसमक्ष°, but probably it may be °मसमक्ष°.

विहगमिव विमानहंसपंक्तेर्
विघटितमेकतरं[1] चतुर्मुखस्य ॥ १५ ॥
च्युतमिव सितचामरं मघोनः
श्रमजडवारविलासिनीकराग्रात् ।
अपहृतमिव लोलपत्रजालं[2]
सुरसरितः पवनेन पुण्डरीकम् ॥ १६ ॥
हरहसितसितं[3] दिवापि कान्ति-
स्तबक[4]मिवापतितं सुधाकरस्य[5] ।
अपि पतितमिवान्तरिक्षपीलोर्
मघवदिभस्य[6] विलासकर्णशङ्खम् ॥ १७ ॥
कुलकम्[7] ।
स च परिणतलोध्र[8]धूलिशुभ्रस्
तरलमवन्तिपतेश्चकार चेतः ।
किसलयमिव बालचन्दनस्य
स्तिमितगतिर्मलयाचलेन्द्रवातैः[9] ॥ १८ ॥
नायकवाक्यम् ।
अवददथ विबुद्धपुण्डरीक-
प्रतिमं[10]मुपान्तचरे[11] निधाय चक्षुः ।

---

१. T. I. and Tr. read एकचरं for एकतरं. २. B. T. I. and Tr. read °पत्रमालं for °पत्रजालं. ३. I. reads हरहसितं हितं for हरहसितसितं, but it is incorrect. ४. I. omits—

....कमिवापतितं सुधाकरस्य ।
अपि पतित..............।.

५. Tr. reads निशाकरस्य for सुधाकरस्य. ६. B. I. and T. read गगननिभस्य for मघवदिभस्य; while K. धवलगजस्य for the same. ७. T. does not insert कुलकम्. ८. B. and I. read °रीत्र° for °लोध्र°. ९. K. reads मलयाद्रिनववातैः for मलयाचलेन्द्रवातैः. १०. K. reads °प्रतिभ° for °प्रतिम°. ११. Tr. reads °तले for °चरे.

दशनमणिमयूखभिन्नवर्णां
गिरमिति मालवराजपूर्णचन्द्रः ॥ १९ ॥

सुरभिकुसुमचुम्बिनाऽवनम्राम्
अलिपटलेन लतामिमां विना मे ।
खगममुमुपदर्शयेत् क एवं
गगनरमापतिपाञ्चजन्यमन्यः ॥ २० ॥

स्मरवरकरिहस्तशीकराणां
हिमशुचयो नवहारमौक्तिकानाम् ।
विदधति रुचयोऽस्य चञ्चुकोटौ
कवलितबालमृणालसूत्रलीलाम् ॥ २१ ॥

अयि! कथय सितच्छदः क चायं
वनलिनीपुलिनान्तबद्धवासः ।
अवनिपतिकलत्रकण्ठयोग्यः
क च शशिबन्धुरनर्घ एष हारः ॥ २२ ॥

वनभुवि पतितः कुतोऽयमस्यां
कथमयमस्य मुखातिथित्वमाप्तः? ।
गुरुविभवपदस्य कस्य वा स्यात्
अयमिति मे न परिच्छिनत्ति चेतः ॥ २३ ॥

---

१. Tr. reads °कीर्ण° for °भिन्न°. २. K. reads °निम्रा° for °नम्रा°. ३. I. reads क एष दूरात् for क एवं. ४. Tr. reads °पाणिपाञ्चजन्यम् for °पाञ्चजन्यमन्यः. ५. B. T. and Tr. read स्मरसुर° for स्मरवर° and I. reads स्मरश्वर°, but corrects स्मरवर.° ६. Tr. reads हिमरुच्चयो and K. समरुच्चयो both for हिमशुचयो. ७. K. reads नव° for वन°. ८. Tr. reads this as follows :-

गुरुविभवपरिच्छदस्य कण्ठादयमिति नं मनः परिच्छिनत्ति ॥.

९. I. reads °नृपस्य for °पदस्य and omits न. १०. T. and I. read मनः परिच्छिनत्ति for परिच्छिनत्ति चेतः.

अयमुचिततरः फणिस्त्रियो वा
कुचकलशान्तरमर्त्ययोषितो वा ?[1] ।
नियतमुदधिमुद्रमीदृशानि
क्षितितलमाभरणानि न स्पृशन्ति ॥ २४ ॥

किमपरमनुगम्य एष हंसः
श्रमजडपक्षतिरावयोर्वनान्ते ।
अयि![2] यदयमवामनस्य भूमिर्
मुखधृत[3]हारलतः कुतूहलस्य ॥ २५ ॥

रमाङ्गदवाक्यम् ।

इति विरतवचस्युदीर्य तस्मिन्
कृतिनि नृपे परमारवंशकेतौ ।
स्फुरदधरविकीर्ण[4][5]दन्तकान्ति-
प्रसरमिदं जगदे रमाङ्गदेन ॥ २६ ॥

जडरुचिरपि रोचते न कस्मै[6]
कथमपि[7] दीर्घगुणेन[8] लब्धसङ्गः ।
नरवर[9] यदनेन हारदाम्ना[10]
तव पतगः स्पृहणीय एष जातः[11] ॥ २७ ॥

---

१. T. reads वर्त्यमर्त्ययोषितो for °मर्त्ययोषितो that is two letters are inserted and B. reads इन्द्रयोषितो for °मर्त्ययोषितो. २. In Tr. the letters यियद are placed for अयि य° and after this the two letters are mutilated. ३. K. and Tr. read °कृत° for °धृत°. ४. I. reads स्फुरदधरं for स्फुरदधर°. ५. K. and T. read °विशीर्ण° for °विकीर्ण°; while I. substitutes °कान्त° for °कान्ति°. ६. Tr. reads तस्मै for कस्मै. ७. B. reads कथमिव for कथमपि. ८. K. and T. read दीर्घगुणेषु and दीर्घगुणासु respectively for दीर्घगुणेन; while Tr. mutilates three letters after °गुणे°. ९. K. reads हरिवर for नरवर. १०. I. substitutes °धाम्ना for °दाम्ना, but on the head of धा there appears the mark of reading, but does not appear in the margin and it seems thereby it is दा. ११. K. reads इत्तः and Tr. हारः both for जातः, but the latter reading does not convey good sense here.

उपवन इव सम्भवः[1] कदाचिन्
नृप घटते विपिनेऽपि हारयष्टेः ।
यदसुर[2]-सुर-नागराजकन्या
इह विहरन्ति नगेन्द्रकन्दरेषु[3] ॥ २८ ॥

शकुनिरयमितो दिगन्तलग्नैर्
अनुपम[4]मौक्तिकनिर्गतैर्[5]मयूखैः ।
तव विरचयतीव सूत्रपातं[6]
सुकृतनिधान[7]! भविष्यतः शुभस्य ॥ २९ ॥

द्रु[8]तमयमनुगम्यतामिदानीम्
अनुगमनेन[9] यतोऽस्य हारलाभः ।
फलमधिकमतोऽपि नः[10] कदाचित्
किमपि[11] भवेदयमेव यस्यै[12] हेतुः ॥ ३० ॥

तरुविटपलतान्तरेण गच्छन्
भुवमभजन्[13] बहुमुक्तमेघवर्त्मा[14] ।

---

१. K. reads संस्मृतिः for सम्भवः. २. Tr. reads अनर° for असुर°. ३. K. reads हि विन्ध्यकन्दरेषु for नगेन्द्रकन्दरेषु and gives marginal correction °कन्दरासु for °कन्दरेषु. ४. I. reads अनुपम° for अनुपम°. ५. K. reads °निःसृतैः and T. °निर्मलैः both for °निर्गतैः. ६. I. is quite mistaken here; it omits °त्र पातं सु° these four letters and corrects in the margin °त्र मद्वै (these letters I cannot safely say are well found out); while Tr. reads सूत्रजातं and K. सूत्रवर्गं for सूत्रपातं. ७. K. T. Tr. and I. read सुकृतनिधानं for सुकृतनिधान. ८. The letter द्रु° in I. seems like भ्रु°, but I am unable to make it out. ९. B. reads नियतो for °न यतो and K. reads °न हि हारलाभ एव for °न यतोऽस्य हारलाभः. १०. I. reads न मः for ऽपि नः. ११. B. reads कमपि for किमपि, but gives marginal reading किमपि. १२. B. reads तस्य for यस्य, but gives marginal reading यस्य; while Tr. reads राज्य° for the same. १३. Except B. all read अभजत् for अभजन्. १४. K. reads °मेघवीथिः for °मेघवर्त्मा.

अयमतिगुरुहारभारजातां[1]

श्रमजडताम[2]लमात्मनो व्यनक्ति ॥ ३१ ॥

नयनपथमयं यथा तवारात्[3]

त्वमपि तथास्य सितच्छदस्य यातः[4] ।

अवनितलमृगाङ्क! यद्वनान्तात्

चकितमिवायमि[5]तस्ततः प्रयाति ॥ ३२ ॥

निचुलवनमतीत्य वर्ततेऽयम्

पुरत इमामयमञ्जिनीमु[6]पेतः ।

नवजलधरशङ्कयेव शङ्के[7]

तरुणतमालवनादितो निवृत्तः[8] ॥ ३३ ॥

किसलयक[9]लिताञ्जलिं त्वरावान्

अयमुपसर्पति नीलसिन्दु[10]वारम् ।

क्षणमयमिह बालचूतमौलौ

विचकिल[11]माल्यविलासमा[12]दधाति ॥ ३४ ॥

अयमभिनवक[13]र्णिकारयष्टिं

झटिति ध[14]नस्तबकस्तनीमु[15]पैति ।

---

१. T. reads °गुरुभारहार° for °गुरुहारभार°. २. B. reads भयम् and gives marginal reading अति° for अलं, but it seems to be incorrect; while K. अपि चात्मनो for अलमात्मनो. ३. Tr. reads तवागात् for तवारात्. ४. K. reads मन्ये for यातः. ५. K. reads इतःपुरः for इतस्ततः and substitutes प्रधावन् for प्रयाति. ६. T. and I. read अतीतः for उपेतः. ७. K. reads मन्ये for शङ्के. ८. K. reads ऽपवृत्तः for निवृत्तः. ९. T. reads °कलिकाञ्जलिं for °कलिताञ्जलिं and Tr. °खचितं गतिस्त्वरावान् for °कलिताञ्जलिं त्वरावान्. १०. K. reads °मिन्दुवारम् and I. reads °सिन्धुवारम् for °सिन्दुवारम्, but it seems incorrect. ११. I. reads °मल्पविलास° for °माल्यविलास°; while T. reads विचकित° for विचकिल°. १२. B. reads in the margin आदधाति for आदधाति. १३. I. reads °कर्णकार° for °कर्णिकार°; while Tr. reads °कान्तहारयष्टिं for °कर्णिकारयष्टिं. १४. K. and T. read घट° for धन°. १५. K. reads उपेतः for उपैति.

अयमतिचपलो निसर्गरिक्तां[1]
स्थलनलिनीमवधीर्य[2] देव! यातः ॥ ३५ ॥
अयमिह हि लतामुपैति कौन्दीं
कुसुमवतीं नवमाधवीं[3] विलङ्घ्य ।
क्षणदलिवलयासु नाऽऽसु तेन[4]
स्खलितमितः सहकारमञ्जरीषु ॥ ३६ ॥
अभिसरति वनस्थलीमिवै[5]ताम्
मदनवतीमयमू[6]ढकामिलीलः ।
स्फु[7]रदतनुशिलीमुखस्य चाग्रे
विचरति कर्ण इवायमर्जुनस्य ॥ ३७ ॥
श्रममपहरतस्तनूर्मिवातैर्[8]
अयमतिथिर्व[9]नपल्वलस्य जातः ।
त[10]रुततिषु तिरोहितो ऽयमेता-
स्वयमरविन्दवनादिवोज्जिहीते[11] ॥ ३८ ॥
कुरबकवनतः कदम्बराजि
व्रजति ततो मुचकुन्द[12]काननानि ।

१. K. reads °रिक्तां for °रक्तां ; while I. has °रिक्तां, but corrects °रक्तां. २. Tr. reads अवतीर्य for अवधीर्य; while K. substitutes पश्य for देव. ३. T. reads मालतीं for °माधवीं. ४. B. reads °वलयाननेन देव for °वलयासु नाऽऽसु तेन. T. तासु तेवं and I. नाऽऽसु तेयं both for नाऽऽसु तेन; while in Tr. four letters are mutilated, but appear in the correction °नु नाविमेष for °सु नाऽऽसु तेन. ५. K. I. Tr. and T. read इह for इव. ६. K. reads °मिव यो° for °मयमू°. ७. T. reads स्फुरदनु नु for स्फुरदतनु°. ८. K. reads °तैःस्वय° for °तैरय°. ९. I. reads वण° for वन°; while K. नवपल्लवस्य for वनपल्वलस्य. १०. I. reads तरुयततिषु रोहितोऽय° for तरुततिषु तिरोहितोऽय°. ११. B. T. and I. substitute इह for इव. १२. I. and Tr. read मुचुकुन्द° for मुचकुन्द°. B. reads the sme, but gives च for चु in the margin.

इति नगमवगाहते सहारम्
त्वामिव धृतक्लम एष राजहंसः ॥ ३९ ॥

कुरु विजयमितो ममार्पयैतत्
धनुरधुना ससुवर्णपुङ्खबाणम् ।
यदयमितगतिर्गतो ऽतिदूरं
जलपतंगः सह नः कुतूहलेन ॥ ४० ॥

हंसानुगमनम् ।

इति कथयति चापमर्पयित्वा
सममिषुभिः स रमाङ्गदे नरेन्द्रः ।
पतगमनु ययौ तमात्तहारं
हरति न कं नववस्तुसम्प्रयोगः ॥ ४१ ॥

ऋजु तमथ विहायसा व्रजन्तम्
रभसवशादनुगच्छतो नृपस्य ।
समजनि भृशमायतो ऽस्य पन्थास्
तरुविटपा-ऽवटवर्जनेन वक्रः ॥ ४२ ॥

नृपतिरनुययौ वने विहङ्गं
नृपतिमभि प्रणयी रमाङ्गदो ऽपि ।

---

१. T. reads सभारः for सहारः. २. I. and Tr. read धृतक्रम for धृतक्लम ३. Tr. reads °जालम् for °बाणम्. ४. B. reads °मभिगर्ति, T. °मिह गते; I. °मामित गतिर् and K. °मभिगतेर् all for °मितगतिर्; while Tr. omits the two letter between °मित and °र्गतो. ५. K. °पतन: and T. °पतकः for °पतगः. ६. K. read कथमपि तत् for सममिषुभिः. ७. T. I. and Tr. read तट° for तरु°; while I तटविटपावटावगुलेन for तरुविटपावटवर्जनेन° and Tr. mutilates three letter after °विटपा and substitutes °खुनेन, T. reads °विटपाहवखुनेन omitting on letter both for °विटपावटवर्जनेन. ८. B. reads °मति° for °मभि.

श्रुतमिव विशदं[1] शुचिर्विवेकः
कृतिनि विवेकमिवान्तरः[2] प्रसादः ॥ ४३ ॥

अथ कमलसरस्तरङ्गदोला-[3]
वलयविलोलरथाङ्गनामयुग्मम्[4] ।
मदकलकलहंसनादकृष्टः[5]
श्रमविवशः[6] स सितच्छदः प्रपेदे ॥ ४४ ॥

विलुलितकबरीकलापमाल्या[7]
मृदुनवशैवलमेखला[8] वहन्त्यः ।
रतिरणमवसाय[9] यत्र नित्यं
सह रमणैरमराङ्गना रमन्ते ॥ ४५ ॥

सलिलगतधियाऽथ तेन[10] दूरात्
स गुरुरमुच्यत निःसहेन[11] हारः ।
जड(ल)हृतहृदयाः कियच्चिरं वा
गुणमहतामिह भारमुद्वहन्ति ॥ ४६ ॥

स च विततमरीचिचञ्चुलेखो[12]
विगलित[13]हारलतामिषेण हंसः ।

---

१. B. reads विशदं, but substitutes in the margin प for श. २. B. reads इव for °मिव, but gives marginal reading °मिव; while I. आन्तरप्रसादः for आन्तरः प्रसादः. ३. T. reads कलहंसस्तरङ्गडोला° for कमलसरस्तरङ्गदोला°. ४. Tr. reads °विलासि° for °विलोल°. ५. B. reads °कृष्टं for °कृष्टः. ६. T. I. and Tr. read °विधुरः for °विवशः. ७. T. reads °माल्यं for °माल्या. ८. I. reads °सेवल° for °शैवल° and drops the letter मे; while K. and Tr. read °शैवलपृङ्कलां for °शैवलमेखला and T. substitutes °मेखलां for °मेखला. ९. T. reads °साद्य for °साय; while Tr. रतिरमणवशा हि for रतिरणमवसाय. १०. Tr. reads गतेन for ऽथ तेन. ११. K. reads निर्बलेन for निःसहेन. १२. Except Tr. all others read °लेखा° for °लेखो. १३. K. reads विगिलित° for विगलित°.

परिणतबिसकाण्डभङ्गपीतं
पय इव विस्तृतधारमुज्जगार ॥ ४७ ॥

अथ कनकमृणालिकायुगस्य[2]
द्युतिनिचयेन चितं[3] विसर्पताऽधः।
अशिशिरमहसो[4] विसारिणा खे[5]
वलयितमंशुलताकदम्बकेन ॥ ४८ ॥

तटभुवि[6] तमपश्यदापतन्तं
पतिरवनेः स्वतंसितायताक्षः[7]।
सितमभिनवहेमदण्डशोभि
स्फटिकशलाकमिवातपत्रमैन्द्रम्[8] ॥ ४९ ॥

सन्दानितकम्[9]।

सरसि धवलिते ततः[10] समन्ताद्
अमृतमरीचिरुचेव तस्य कान्त्या।
व्यधित[11] बलवती वियोगपीडा
पदमपदे हृदयेषु चक्रनाम्नाम् ॥ ५० ॥

१. T. reads विस्मृतधार° for विस्तृतधार°. २. I. mutilates the letter स्य. ३. B. reads °निश्चये खचितं and gives marginal reading °निश्चयैरचितं; while K. °निश्चयरचितं all for °निश्चयेन चितं. ४. B. and I. read अतितनमहसा for अशिशिरमहसो. T.'s reading may be the same, but it has अ - तित° for अशिशिर.° If we conceive that the three letters are mutilated it violates the छन्द (chhanda). ५. Tr. reads विसारिणाङ्गैः for विसारिणा खे; while B. reads विसारिणां for विसारिणा. ६. T. and I. read तटलुठित° for तटभुवि त°; while Tr. तटलुलित° for the same. ७. I. reads °विलक्षः for °यताक्षः. ८. K. reads °पत्रतुल्यम् for °पत्रमैन्द्रम्. ९. In T. and Tr. there do not occur this. १०. T. reads सरः for ततः. ११. I. reads विधत for व्यधित, but it seems to be incorrect.

अतिविततगुणैकधाम्नि[1] तस्मिन्
विधुरमधःपतिते[2] विशुद्धिभाजि[3] ।
कथमपि वसुधाधिपः प्रमोदं[4]
झटिति[5] जगाम गुणिष्वमत्सरो हि[6] ॥ ५१ ॥

अथ नभसि पिशङ्गसान्ध्यराग-
च्छुरित[7] इवाम्बरनिम्नगातरङ्गम् ।
कियदपि सरसस्तटे[8] स गत्वा
कमलरजःकपिशे[9] ददर्श हारम् ॥ ५२ ॥

स[10] च सपदि रमाङ्कदोपनीतं
कनकसरोरुहकान्तिना[11] करेण ।
निजयश इव मूर्तमाददे तं
भुवनतला[12]भयदानदीक्षितेन ॥ ५३ ॥

---

१. Tr. and I. read सति for अति°; while T. सति विततगुणैरधाम्नि तास्मिन् वि-धर° for अतिविततगुणैकधाम्नि तास्मिन् विधुर°. २. I. inserts पति पतिते for पतिते. ३. T. and I. read विशुद्धभाजि, Tr. विशुद्धिभासि both for विशुद्धिभाजि. ४. Tr. reads प्रमोदात् for प्रमोदं. ५. K. and I. read झगिति for झटिति. This reading is neither a reading nor incorrect form because this is the style of pronunciation. Northern Indian poets and specially the Kashmirians pronounce झगिति and Southern Indian poets झटिति. ६. B. I. and T. read ऽपि for हि. ७. Tr. reads °च्छुरितमि° for °च्छुरित इ°. ८. T. reads च सरस्तटे for सरसस्तटे. ९. B. reads °अच्छुरिते, Tr. °जःकपिशं and K. °जःकपिलं all for °जःकपिशे. १०. T. Tr. and I. read this stanza as follows :—

स च सपदि रमाङ्कदोपनीतं
भुवनतलाभयदानदीक्षितेन ।
निजयश इव मूर्तमाददे तं
कनकसरोरुहकान्तिना करेण ॥.

११. K. reads कनकसरोजसुधासितांहसा for कनकसरोरुहकान्तिना. १२. T. reads भुवनलताभयं° for भुवनतलाभय°, but it seems incorrect.

7

सुजनमिव गुणैरुपोढशोभं
[1]शुचितरबालमृणाल[2]सूत्रदीर्घैः ।
अहमहमिकया [3]कृतप्रवेशं
तरणिकरग्लपितैरिवेन्दुपादैः ॥ ५४ ॥

दधतमरुणमङ्गरागशेषं
क्वचिदपि यष्टिषु तारमौक्तिकासु ।
घटितमिव नवातपेन [4]किञ्चिद्
[5]बहुनवया शशलक्ष्मण[6]स्त्विषा च ॥ ५५ ॥

अतिविततरुचिं वहन्तमन्तस्
[7]तरलमणिं तरुणेन्द्रगोपशोभम् ।
अविरलमसकृन्निवास[8]लग्नं
ललितवधूहृदयादिवानुराग[9]म् ॥ ५६ ॥

कतिचिदपि लतान्तरे [10]दधानम्
मृगमदलिप्ततलानि मौक्तिकानि ।
शबलजललवैरिवात्तजन्मा-
न्यमरनदी-[11]यमुनातिथेर्घनस्य ॥ ५७ ॥

---

१. T. reads शुभतर° for शुचितर°. २. B. reads °दीर्घशोभम्, Tr. °सूत्रदीर्घम्, and T. °दीर्घसूत्रम् all for °सूत्रदीर्घैः. ३. K. reads धृत° for कृत°. ४. T. reads काञ्चित् for किञ्चित्. ५. B. reads बहुनतया and I. बहुरवया (?) both for बहुनवया. ६. K. reads त्विषेव for त्विषा च and I. त्विष च for the same though a mistake. ७. B. reads तरलमणेस्तरुणेन्द्रगोपशोभाम् for तरलमणिं तरुणेन्द्रगोपशोभम्; while T. substitutes °कोप° for °गोप°, but probably it is a mistake. ८. Here I. seems to read °लज्जं for °लग्नं and it repeats सलज्जं ललितवधूहृदयादिवा°. ९. K. reads °दिवानुबन्धम् for °दिवानुरागम्. १०. K. reads पिधानम् (तम्?) for दधानम्. ११. B. reads °यमुनानिधेर्धनस्य and gives in the margin घनस्य for धनस्य. Tr. reads °यमुनानिधेर्घनस्य and K. °यमुनानिधेर्जलस्य all for °यमुनातिथेर्घनस्य.

अनुगुणपदवीविनिर्गतासु
प्रतिलतमायतमौक्तिकप्रभासु ।
रजनिकरमरीचिसूचिदीर्घैर्
बहुभिरिव ग्रथितं मृणालसूत्रैः[1] ॥ ५८ ॥

अतिदृढमनुरक्तया वितीर्णम्[2]
मुखरमहोदधिमेखलां वहन्त्या ।
उरसि निहितबन्धुजीवमुख्यां
विचकिलमाल्यमिव स्वयंवराय ॥ ५९ ॥

कुलकम्[3] ।

अरुचदथ करे स तस्य बिभ्रत्
युवतिरदच्छदकान्तिमध्यरत्नम्[4] ।
किमपि मनसिजेन[5] शासनाङ्कः
प्रहितनिजायुधचित्रपुष्पमुद्रः[6] ॥ ६० ॥

शशिकररुचिना[7] स तेन रेजे
मृदुकरपुष्करवर्तिना नरेन्द्रः ।
अमरपुरधुनीसमुद्धृतेन[8]
त्रिदशकरीव[9] मृणालकन्दलेन ॥ ६१ ॥

---

१. K. reads °जालैः for °सूत्रैः. २. T. reads अतिरिक्तया वितीर्णम् and Tr. अनुरक्तया विकीर्णम् both for अनुरक्तया वितीर्णम्. ३. Tr. reads सप्तभिः कुलकम्; while T. omits it. ४. K. reads °रत्ने for °रत्नम्. ५. I. reads यैन सा for °येन सा°, but the letters ज and श are written in N. Indian writings for य and स respectively. ६. T. and B. read इवाहितमीनपिच्छमुद्रः, I. इवाहितमीनपिच्छमुद्रः and K. इवाहितेन पिच्छमुद्रः all for °निजायुधचित्रपुष्पमुद्रः; while I. reads सासनाङ्कु° for शासनाङ्कः. ७. K. reads °सित° for °कर°; while I. °कचिना प° for °रुचिना स. ८. Tr. reads °समुद्गतेन for °समुद्धृतेन; while I. substitutes ष° for °स°. ९. B. reads °पुरीव for °करीव.

उरसि नरपतेः पतंश्चकाशे
कनकशिलाविपुले तदंशुपूरः ।
अखिलभुवनकोशराजलक्ष्म्या
निहित इवाधिकमुल्कया कटाक्षः ॥ ६२ ॥

विकृतिरुदधिशुक्तिषु च्युतानां
ध्रुवमियमिन्दुकलासुधालवानाम् ।
जलदजलकणोद्भवेषु कामं
निवसति कान्तिरियं न मौक्तिकेषु ॥ ६३ ॥

न किमयमुडुमण्डलापवादः
कुमुदवनानि पुरोऽस्य न त्रपन्ते ।
कथमयमवधिर्न मुक्तिभाजाम्
इति तमवेक्ष्य स चिन्तयाञ्चकार ॥ ६४ ॥

सन्दानितकम् ।

---

१. From the word अखिलभुवनकोश to भरणं भवादृशी (Canto IV. 44) the intermediate portion, *i. e.*, 12 stanzas of this Canto and 54 of the fourth is omitted in T., this omission must have happened through writer's carelessness. २. I. and Tr. read °राज्यलक्ष्म्या for °राजलक्ष्म्या. ३. B. reads उक्तया for उल्कया, but gives marginal reading उल्कया. ४. I. omits the following portion :—

· · मियमिन्दुकलासुधालवानाम् ।
जलदजलकणोद्भवेषु कामं
निवसति कान्तिरियं न मौक्तिकेषु ॥ ६३ ॥
न किमयमुडुमण्डलापवादः
कुमुदवनानि · · · · · · · ।

The correction appears in the margin, but it is not sufficient for the omitted portion. ५. B. reads °लवोद्भवेषु for °कणोद्भवेषु. ६. B. reads पुरो ननु for पुरोऽस्य न. ७. Tr. and I. read कथमवधिरयं न मुक्तिभाजाम् for कथमयमवधिर्न मुक्तिभाजाम्; while B. substitutes भुक्ति° for मुक्ति°. ८. K. does not insert this.

स्फुरदु[1]दरनिवेशितेन्द्रनीलां
[2]मदजलराजिमिव स्मरद्विपस्य ।
अवनिपतिरपङ्क्तयदक्षराणां
ततिमथ हारमृणालिकान्त[3]राले ॥ ६५ ॥

अभिनवलिखि[4]तामिव प्रशस्तिं
मदनमहानृपतेः स पार्थिवेन्द्रः ।
इ[5]ति निबिडकुतूहलाकु[6]लैस्तां
ललितपदाभरणामवाचयच्च[7] ॥ ६६ ॥

'मनसिजवर[8]वीरवैजयन्त्यास्
त्रिभुवनदुर्लभविभ्रमैकभूमेः ।
कुचमुकुलविचित्रपत्रवल्ली-
[9]परिचित एष सदा शशिप्रभायाः' ॥ ६७ ॥

किमु विपु[10]लमिमं मनुष्यलोकं
पुरमुत पर्वतपक्षशातनस्य ।
किमु युवतिरियं भुजङ्गभर्तुर्
भुवनमल[11]ङ्कुरुते शशिप्रभेति ॥ ६८ ॥

वदति शशिमुखीमितो न दूरे
तरुणविलेपनभिन्न एष हारः ।

---

१. B. and K. read °दुरुविनिवेशि° for °दुरनिवेशि.° २. B. and I. read मदलव° for मदजल°. ३. B. reads °न्तरेव and gives marginal reading °न्तरे च for °न्तराले. ४. K. reads °कलिताम् for °लिखिताम्. ५. Tr. reads अति° for इति. ६. K. reads °विल° for °कुल°. ७. K. reads अपाठयच्च for अवाचयच्च. ८. I. and Tr. read °नव° for °वीर°; while Tr. mutilates व. ९. K. reads °परिचयवर्धित एष नागलक्ष्म्याः for °परिचित एष सदा शशिप्रभायाः. १०. K. reads विकलम् for विपुलम्. ११. I. reads °कुरुते°, but corrects °क्रियते.

सरितमिव वनान्तरे समीरैः[1]
स्फुटितसरोरुहरेणुना पिशङ्गः ॥ ६९ ॥

कुसुमशरसखस्य कस्यचित्किं
समजनि नाकतलाधिदेवतेयम्[2] ।
उत[3] मुकुलितमन्मथावतारे
पथि विचरेदधिनाककन्यकानाम्[4] ॥ ७० ॥

अपि कृतनयनोत्सवेन तन्वी
तरुणसुधामधुरेण[5] दर्शनेन ।
मुदमुपजनयेद्वने[6] किमेषा ?
मम शरदिन्दुकलेव कैरवस्य ॥ ७१ ॥

इति कियदपि यावदेव चिन्ता-
वशमगमत्स[7] मनुष्यलोकपालः ।
धनुरपि निचुलं[8] विधाय तावत्
कुसुमशरोऽस्य[9] बभूव पार्श्ववर्ती ॥ ७२ ॥

अथ सम्भ्रमादनुचरेण
विनिहिततमालपल्लवे ।
आस्त तरुकुसुमसंवलिते[10]
सरसः स सैकतशिलातले[11] नृपः ॥ ७३ ॥

---

१. K. reads समीरस्फुटित° for समीरः स्फुटित°. २. B. and K. read साङ्कुतला° for नाकतला°; while two letters before तला are mutilated in Tr. ३. B. reads तत° for उत. ४. B. Tr. and I. read °रधुनापि कन्यकानाम् for °रधिनाककन्यकानाम्. ५. I. substitutes °षु° for °सु°. ६. K. reads मुहुरुपजनयेन्मुदं for मुदमुपजनयेद्वने. ७. I. substitutes स for श. ८. K. reads निपुणं for निचुलं. ९. Tr. and I. read विषमशरो for कुसुमशरो. १०. T. and I. read कुसुमतरु° for तरुकुसुम°; while B. substitutes तनु° for तरु°. ११. Tr. reads °मैकक° for सैकत°.

आलक्ष्य स्तनसख्यलक्ष्मणि ततस्तस्मिन्कुरङ्गीदृशो
मुक्तादाम्नि करोदरप्रणयितामाप्ते तुषारत्विषि ।
विस्मृत्या सहसा हृतं चतुरया क्रोडीकृतं चिन्तया
चेतः श्रीनवसाहसाङ्कनृपतेरुत्कण्ठया ऽऽकृष्यत ॥ ७४ ॥

इति श्रीमृगाङ्कगुप्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभाहारलाभो नाम तृतीयः सर्गः ॥ ३ ॥

---

१. I. reads विस्मित्या for विस्मृत्या. २. B. reads हृतं for हृतं. ३. I. reads परिमलस्य नवसाहसाङ्कचरिते हारलाभस्तृतीयः सर्गः. Tr. reads the same, but adds कृतौ after परिमलस्य and नाम after हारलाभो; while B. reads only इति तृतीयः सर्गः.

## अथ चतुर्थः सर्गः ।



ततः स चेतस्यवनीपतिर्दधे
शशिप्रभालोकमहोत्सवस्पृहाम् ।
उपोढरागामुदधिस्तटोदरे[1]
नवोद्गतां विद्रुमकन्दलीमिव ॥ १ ॥

शशिप्रभाशानलिनीमृणालताम्
उपागते मौक्तिकदाम्नि सादरः ।
तदागते[2] दूत इव न्यवेशयत्
स[3] दर्शितप्रेमलवे विलोचने ॥ २ ॥

पुनः पुनः षट्पदराजिमेचकां
तदिन्द्रनीलाक्षरपङ्क्तिमैक्षत ।
स तत्क्षणान्[4]मन्मथजातवेदसं
तनीयसीं धूमलतामिवोद्गताम् ॥ ३ ॥

सुगन्धिहारादनुलेपनं करे
समुन्मिषत्स्वेदलवे विलुम्पति[5] ।
असङ्गताया अपि दीर्घचक्षुषः
पयोधरस्पर्शमिवाससाद सः[6] ॥ ४ ॥

तदीयनामाङ्कलिपिं शनैः शनैः
सलीलमावर्तयितुं प्रचक्रमे ।

---

१. B. reads तटान्तरे for तटोदरे. २. Tr. reads उपागते for तदागते. ३. K. and Tr. read प्रदर्शित° for स दर्शित°. ४. I. reads तत्क्षणं for तत्क्षणात्. ५. K. reads विमुञ्चति for विलुम्पति. ६. K. reads °प सादरः for °ससाद सः.

परिस्फुरत्पल्लवपाटलाधरो
रहस्यविद्यामिव मन्मथस्य सः ॥ ५ ॥

अनेकरूपोऽलिखनप्रगल्भया
सुतीक्ष्णया वर्तिकयेव चिन्तया ।
स तामनाप्तेक्षणसंस्तवां पुरा
लिलेख चित्ते मुहुरन्यथान्यथा ॥ ६ ॥

अनङ्ग-चण्डातपतप्तयोस्तदा
शशिप्रभाविभ्रमदर्शनम्प्रति ।
द्वयोरभूदुत्सुकता वनान्तरे
विलासिनस्तस्य च कैरवस्य च ॥ ७ ॥

उदग्रदिग्वारणहस्तहारिणा
स दक्षिणेन स्फुरता च बाहुना ।
स्थिरीकृताशो मनसाऽपि दुर्लभाम्
अदुर्लभामिन्दुमुखीममन्यत ॥ ८ ॥

---

१. K. reads °पाटलाधरे for °पाटलाधरो. २. Tr. reads °रूपोल्लिखन° for °रूपालिखन°; while K. substitutes °प्रवीणया for °प्रगल्भया. ३. B. reads अवाप्ते° for अनाप्ते°. ४. B. and K. read पुनरन्यथा° for मुहुरन्यथा°. ५. K. reads °दर्शनेन वा for °दर्शनम्प्रति. ६. I. substitutes here also °षि° for °सि°. This manuscript substitutes here and there ष for स and स for ष, but we neglect it hereafter. ७. K. does not insert the following stanza:—

उदग्रदिग्वारणहस्तहारिणा
स दक्षिणेन स्फुरता च बाहुना ।
स्थिरीकृताशो मनसाऽपि दुर्लभाम्
अदुर्लभामिन्दुमुखीममन्यत ॥ ८ ॥,

only fourth charaṇa appears in the marginal correction. ८. I. reads स्फुरिता for स्फुरता, but it seems to be incorrect; while Tr. and I. substitute ऽथ for च. ९. K. reads न दुर्लभाम् for अदुर्लभाम् and अमंस्त सः for अमन्यत.

पुरो विमुञ्चन्नयने यदृच्छया
नृपस्तमालद्रुमकाननोदरे।
अपश्यदत्रावसरे विलासिनीं
पयोदमध्ये शशिनः कलामिव ॥ ९ ॥

नायकवाक्यम्।

अथैष दीर्घा दशनार्चिषः किरन्
मुखामृतांशोः किरणच्छटा इव।
निरीक्ष्य तामुन्मदहंसगामिनीं
रमाङ्गदं सस्पृहमित्यवोचत् ॥ १० ॥

शनैश्चरन्ती विपिने तव स्थिता
नितम्बिनी कश्चिदियं दृशोः पथि? ।
अधीरतां दक्षिणमातरिश्वना
लतेव नीता मसृणेन माधवी ॥ ११ ॥

युता सिताभिः सुमनोभिरेतया
परिश्लथेयं कबरी नियम्यते।
उदस्तभास्वत्करकान्तया श्रिया
दिनस्य ताराशबलेव शर्वरी ॥ १२ ॥

असत्कवेर्वागिव वीतसौष्ठवं
निवेशयन्ती पदमव्यवस्थया।
असावनेकस्खलितैः समाकुला
विमुच्य मार्गं किमितः प्रतिष्ठते ॥ १३ ॥

---

१. K. reads °वीथिकोदरे for °काननोदरे. २. Tr. and I. read अपश्यत् for अपश्यत्. ३. K. Tr. and I. read सस्मितम् for सस्पृहम्. ४. Tr. reads काचिदियं and I. काश्चिदियं for कश्चिदियं. The latter seems to be incorrect. ५. K. reads °मसृणेन माधवीम् for मसृणेन माधवी. ६. B. I. and Tr. read °सिताभिः for °सिताभैः; while K. substitutes उता for युता. ७. I. reads नियम्यते for नियम्यते, but the letter यि may be नि. ८. K. reads पदेपदे for समाकुला. ९. B. and K. read किमितोऽधितिष्ठति and Tr. किमुत प्रतिष्ठते both for किमितः प्रतिष्ठते.

हठेन नेतुं वशतामिवात्मनो
मनोभिरामासु विलासभङ्गिषु ।
धृतांशुका ताभिरियं पदे पदे
लताभिरम्भोजमुखी निरुद्ध्यते ॥ १४ ॥

विचिन्वती किञ्चिदिवेयमादरात्
अपक्ष्मपातास्तिमिते विलोचने ।
गते ऽवतंसोत्पलपत्रबन्धुताम्
इतस्ततः पद्मवने विमुञ्चति ॥ १५ ॥

मृदु प्रयान्तीयमनिम्न-निम्नयोः
सितांशुका कामपि कान्तिमश्नुते ।
जले कलेव प्रतिबिम्बितैन्दवी
वनानिलोदञ्चदवाञ्चदूर्मिणि ॥ १६ ॥

प्रसादमस्माकमरण्यदुर्लभैर्
विधेहि सालक्तकपादताडनैः ।
असावशोकैः क्षणमाश्रितैः श्रमात्
इतीव मत्तालिरुतेन याच्यते ॥ १७ ॥

---

१. I. and Tr. read गुरुता° for वशता°. २. B. reads °भूमिषु for °भङ्गिषु. ३. I. and Tr. read धृतांशुकां for धृतांशुका. ४. K. reads नु रुद्ध्यते for निरुद्ध्यते. ५. B. and I. read अपक्षपात° for अपक्ष्मपात°. ६. B. K. and I. read पद्मवनेषु मुञ्चति for पद्मवने विमुञ्चति, but B. gives in marginal reading वि° for °षु. ७. I. reads स्थितांशुका for सितांशुका, but the letter स्थि may be सि; while Tr. reads सितांशुकान्तामपि for सितांशुका कामपि. ८. I. reads °दैन्दवी, but it seems to be incorrect. ९. K. and Tr. read अनन्य° for अरण्य°. In I. the letters रण्य are not clear enough to be read. १०. B. reads °दुर्लभं for °दुर्लभैः. ११. B. reads अशोकः क्षणमाश्रितः for अशोकैः क्षणमाश्रितैः. १२. B. reads °रुतेन याचते for °रुतेन याच्यते.

अभेदमूढैरतबकाभिरावृता
लताभिरीषत्कुलितालिपङ्क्तिभिः ।
इयं पुरो मारुतनर्तितालका
न लक्ष्यते व्यक्तमवामनस्तनी ॥ १८ ॥

ऋजु क्वचित्क्वाप्यनृजु प्रवर्तते
क्वचित्स्खलत्युच्चशिलातले पथि ।
इयं शनैः शैलनदीव च क्वचित्
विनम्रवानीरतलेन गच्छति ॥ १९ ॥

स्थिते परिष्वज्य सरोजिनीमिमां
वने घनेऽस्मिन् कुसुमोन्मदालिनि ।
प्रयाति सासूयमियं कथंचन
स्वहस्तसीमन्तितमार्गवीरुधि ॥ २० ॥

क्वचित्क्वचित्स्वेदलवोद्गमो मुखे
समाहृतेयं कबरी यथा तथा ।
अयं च कम्पः कुचयोर्वधूरियं
रतिश्रमव्याकुलितेव लक्ष्यते ॥ २१ ॥

अनेन रूपातिशयेन लीलया
विविक्तनेपथ्यपरिग्रहेण च ।

---

१. Tr. reads °मुक्त° for °मुद्ध°. २. I. reads °रागता लताभिः and Tr. °रागताङ्गताभिः both for °रावृता लताभिः. ३. B. reads °कुलितालिपङ्क्तिभिः and K. °कुलिताकुपाङ्क्तिभिः for °कुलितालिपङ्क्तिभिः. ४. Tr. reads शैलनदी वने for शैलनदीव च. ५. B. reads सिते for स्थिते. ६. Tr. वने वने ऽस्मिन् for घने घनेऽस्मिन्. ७. K. reads °लवभ्रमो for °लवोद्गमो. ८. K. reads समीकृतेयं for समाहृतेयं; while B. reads यथा यथा for यथा तथा. ९. K. reads वधूमिव रतिश्रमव्याकुलितां प्रपश्यते for वधूरियं रतिश्रमव्याकुलितेव लक्ष्यते. १०. K. reads विभक्त° for विविक्त° and gives in the margin विरक्त° for the same.

अरण्यसञ्चारपरेयमेकिका
कुतूहलं मे हृदये निषिञ्चति ॥ २२ ॥

असौ पराधीनतयाऽस्पदीकृता
न बालिका न प्रतिभासते मम।
अयं स्फुरत्काञ्चनपद्मसोदरम्
सचामरो ऽस्याः कथमन्यथा करः ॥ २३ ॥

इयं किमु स्याद्वनदेवताऽऽगता
गता धरां व्योमवधूरियं किमु।
अवेक्षितुं हारमिहेयमागता
शशिप्रभावारविलासिनी किमु ॥ २४ ॥

इतः स चित्राकृतिरीक्षितो मृगम्
सितच्छदादाममितो विभूषणम्।
इतश्च दृष्टेयमिति प्रसूयते
प्रसक्तमाश्चर्यमियं वनस्थली ॥ २५ ॥

पाटलाया नायकदर्शनम्।

इति प्रकृत्या मधुरोक्तिरुक्तवान्
तयाऽग्यताक्ष्या ददृशे विशाम्पतिः॥
तमालपत्रापिहिते शिलातले
कुमुद्वतीकान्त इवाम्बरे स्थितः ॥ २६ ॥

ततस्तदालोकनकौतुकेन सा
स्थिता निमेषोज्झितपक्ष्मलेक्षणेम्।

१. B. reads मनसः प्रयच्छति for हृदये निषिञ्चति. २. K. reads °मेष वै for °मन्यथा. ३. Tr. reads ऽथ वा सुराङ्गना भोगिवधूरियं किमु। for ऽऽगता गता धरां व्योमवधूरियं किमु।. ४. K. and Tr. read अपेक्षितुं for अवेक्षितुं. ५. In Tr. वा is mutilated. ६. K. and Tr. read ईक्ष्यते for ईक्षितो. ७. B. reads °वमितः for °ममितो. ८. K. reads प्रलक्ष्यते for प्रसूयते. ९. K. reads प्रत्येकमाश्चर्यवनानि for प्रसक्तमाश्चर्यमियं. १०. K. reads अम्बरस्थितः for अम्बरे स्थितः. ११. B. reads निमेषोज्ज्वलपक्ष्मलक्ष्मणा for निमेषोज्झितपक्ष्मलेक्षणम्.

विनिद्रसत्केसरपङ्कजा बभौ
वने निवातस्तिमितेव पद्मिनी ॥ २७ ॥

पाटलायाः स्वगतम् ।

अचिन्तयस्तेति च पाटलाधरः
सितारविन्दच्छदेदीर्घलोचनः ।
मुखं सुधादीधितिसुन्दरं दधन्
वने गतः को ऽयमनङ्गविभ्रमः ॥ २८ ॥

व्यनक्ति कल्याणमयीयमाकृतिर्
महीयसीमस्य महानुभावताम् ।
असत्यमेतासु रुचा वितन्वती
लतासु कार्तस्वरपल्लवोद्गमम् ॥ २९ ॥

भुजेन चित्राङ्गदरत्नशोभिना
सतारहारेण भुजान्तरेण च ।
वदत्ययं मध्यमलोकपालताम्
परार्ध्यचूडामणिना च मौलिना ॥ ३० ॥

अनातपत्रो ऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः ।
अचामरो ऽप्येष सदैव वीज्यते
विलासवालव्यजनेन को ऽप्ययम् ॥ ३१ ॥

१. K. reads °सान्द्रार्द्र° for विनिद्र°. २. Tr. reads स्मिता° for सिता°. ३. K. reads °लोल° for °दीर्घ°. ४. K. reads in the margin °पाण्डुरं for °सुन्दरं. ५. I. and Tr. read °मनङ्गतः प्रति for °मनङ्गविभ्रमः. ६. K. and Tr. read महीयसी for महीयसीं°; while I. महानुभावताम् for महानुभावताम्. ७. K. reads न नून° for असत्य°. ८. Tr. reads रत्नाङ्गदचित्र° for चित्राङ्गदरत्न°. ९. I. reads °मणिभारमौलिना for °मणिना च मौलिना. १०. K. reads सदैव for सदैव and Tr. सदैव for the same.

प्रियेयमारूढगुणा सुवंशभूर्
न चान्तिकं चापलताऽस्य मुञ्चति ।
इमे पृषत्का अपि पार्थिवश्रियो
विलासकर्णोत्पलपल्लवा इव ॥ ३२ ॥

इतः शिलोत्सङ्गतले निषेदुषा
दिवश्च्युतेनेव कुरङ्गलक्ष्मणा ।
अधस्तरूणाममुना विनीयते
क्षणं मृगव्योपनतः परिश्रमः ॥ ३३ ॥

अयं स न स्यान्नवसाहसाङ्क इ-
त्यनङ्गलीलासु कृती भुवः पतिः ।
स येन मुक्तो निजनामलाञ्छितः
शशिप्रभाकेलिकुरङ्गके शरः ॥ ३४ ॥

अयं स नो हार इवास्य दृश्यते
करोदरे पल्लवपाटलत्विषि ।
इतः किमेतस्य न सैकते स किं
सितच्छदो लोचनगोचरं गतः ॥ ३५ ॥

सुवर्णपुङ्खे लिखितं शिलीमुखे
तदस्य नामास्ति समानमाकृतेः ।
यदद्भुतामेकपदे पृषत्कताम्
अगादनङ्गस्य शशिप्रभाम्प्रति ॥ ३६ ॥

---

१. Tr, reads अथेय° for प्रियेय°. २. Tr. reads इव and corrects in the margin इह for अपि. ३. K. reads नूनं for इतः. ४. I. reads अनङ्गशीलः सुकृती and Tr. अनङ्गलीलः सुकृती for अनङ्गलीलासु कृती; while K. अनङ्गलीलासुकृतिः for the same. ५. Tr. reads जनो for स नो and corrects in the margin स नो. ६. I. and Tr. read ऽलक्तक° for पल्लव°. ७. B. and K. read किलैतस्य for किमेतस्य. ८. Tr. reads °न for स. ९. I. reads तदस्ति नामाऽस्य and Tr. तदस्य नामास्य both for तदस्य नामास्ति. १०. Tr. reads पृषद्कताम् for पृषत्कताम्, but it seems to be incorrect.

अनेन चेद्योगमुपैति दैवतः
फणीन्द्रकन्या शशिनेव रोहिणी ।
अनल्पलावण्यतिरस्कृतोपमं
वपुस्तदस्याः सफलत्वमेष्यति ॥ ३७ ॥

विधातुमेनामहमेव वा क्षमा
मितोदरीमङ्कतलेऽस्य को विधिः ।
ममेदृशे यद्विषये विमत्सराः
स्तुवन्ति सख्यो मसृणोक्तिसौष्ठवम् ॥ ३८ ॥

सहामुना किञ्चिदुपान्तवर्तिना
वदत्यसावुद्गतदन्तदीधितिः ।
कुतूहलाक्षिप्तनिमेषलास्यया
विलोकयन्मामिव दीर्घया दृशा ॥ ३९ ॥

पाटलायाः समीपमागमनम् ।

अथाधिगन्तुं किल तस्य पक्षिणो
गतिं वनान्ते कथमप्यलक्षिताम् ।
तमभ्यगात्सा नृपतिं सचामरा
सरित् सफेना निधिमम्भसामिव ॥ ४० ॥

समुच्चरन्नूपुरसिञ्जितैः पदैर्
यथा यथा सम्मुखमाजगाम सा ।

---

१. K. reads शर्वरी for रोहिणी. २. Tr. and I. read तदाऽस्याः for तदस्याः. ३. I. and Tr. read °मीयते for °मेष्यति. ४. I. and Tr. read निधातु° for विधातु°. ५. B. reads क्षमे for क्षमा. ६. B. reads °मेकपदे for °मङ्कतले. ७. Tr. reads ऽलं for यत्. ८. K. and Tr. read ममसौऽति° for मसृणोक्ति°. ९. Tr. reads इहा° for सहा°. १०. I. reads °दीधिति for °दीधितिः. ११. K. reads विलोकयन्त्या: मिव for विलोकयन्मामिव; while Tr. substitutes इह for इव. १२. I. and Tr. read अर्णसां for अम्भसां. १३. Tr. reads °सिञ्चितैः for °सिञ्जितैः.

तयाऽऽयताक्ष्येव तथातथेरि[1]तो
दृ[2]गस्य पश्चादपसारमाददे[3] ॥ ४१ ॥

शनैस्ततस्तां सविधोपसर्पिणीम्
निरीक्ष्य द्वारं पिदधे [4]नराधिपः ।
निजोत्तरीयेण सितेन मारुतः
शरद्घनेनेव [5]शशाङ्कमण्डलम् ॥ ४२ ॥

पयोधरोत्सङ्गनिवासलालितं
व्यधादिमं पन्नगराजकन्यका ।
इति [6]प्ररोहद्बहुमानमन्थरो
बभूव तस्मिन्नवनीपुरंदरः ॥ ४३ ॥

अनल्पलावण्यविलासजन्मभूर्
विचित्ररत्नद्युति[7]भास्वरोर्मिका ।
न[8]मिद्धमुक्ताभरणं भुवः पतिम्
[9]पयोधिवेलेव सुवेलमाप सा ॥ ४४ ॥

अ[10]वाप देवः श्रियमन्तिकस्थया
तया स बालव्यजनाङ्कहस्तया ।
निषेव्यमाणः स्फु[11]टलक्ष्यदेहया
नरेन्द्रलक्ष्म्येव यशःसमेतयो[12] ॥ ४५ ॥

---

१. Tr. mutilates रि. २. B. and K. read मृगस्य for दृगस्य. ३. K. and Tr. read °मादधे for °माददे. ४. K. reads जनाधिपः for नराधिपः. ५. Tr. and I. read मृगाङ्क° for शशाङ्क°. ६. K. reads प्रगल्भं for प्ररोहत्.° ७. I. and Tr. read °भासुरो° for °भास्वरो°. ८. K. reads नमित्थ° for नमिद्ध.° ९. B. reads पयोद° for पयोधि°. १०. Tr. omits ना through mistake. ११. Tr. reads स्फुटदेहलक्ष्यया for स्फुटलक्ष्यदेहया. १२. K. reads °सनाथया for °समेतया.

पाटलाकृतः सत्कारः ।

विभिन्नचूर्णालकभक्ति[1] कुर्वती
विकीर्णचूडामणिचन्द्रिकं शिरः ।
अथानुभावेन निदेशितेव[2] सा
ननाम मानिन्यवशा विशाम्पतिम् ॥ ४६ ॥

दृशा नरेन्द्रेण निदेशिते स्वयं
शिलातले नातिविदूरवर्तिनि[3] ।
उपाविशत्सा रशनामणित्विषा
निषिच्यमाने[4] ऽमरचापशोभिनि ॥ ४७ ॥

रमाङ्गदवाक्यम् ।

तयातिदीर्घैर्दशनानुपातिभिर्[5]
विकृष्यमाणामिव भूषणांशुभिः ।
इति क्षितीशेङ्गितवर्त्मदीपिकाम्
उदीरयामास गिरं रमाङ्गदः ॥ ४८ ॥

अनेन विन्ध्याद्रिविहारजन्मना[6]
श्रमेण कामं भवती कदर्थिता ।

---

१. B. and K. read °पङ्क्ति for °भक्ति. २. K. reads स्वतोऽनुभावेन निदर्शितेव for अथानुभावेन निदेशितेव. ३. I. omits the following :—

............. विदूरवर्तिनि ।
उपाविशत्सा रशनामणित्विषा
निषिच्यमानेऽमरच्चापशोभिनि ॥ ४७ ॥
तयातिदीर्घैर्दशनामपातिभिः,

but in the marginal correction appears विदूरवर्विनि । उपाविशत् वेपितवामनस्तनी for the above omitted portion. I cannot say that this marginal correction is exactly the same; while B. and Tr. read नातिसमीपवर्तिनि for नातिविदूरवर्तिनि. ४. Tr. reads निबध्यमानामर° for निषिच्यमानेऽमर°; while in B. it appears in the marginal reading निषेव्यमाने for निषिच्यमाने. ५. Tr. reads तयानु° for तयाति° and B. दशनाम° for दशनानु°. ६. Tr. reads °विन्ध्यातपभार° for °विन्ध्याद्रिविहार°.

प्रसुप्तजूटाहिमुखाऽनिलोष्मणा
जटाविटङ्केन्दुकलेव शूलिनः ॥ ४९ ॥

अमी सरोजप्रतिमे मुखे मुहुस्
तवातपाताम्रकपोलभित्तिनि ।
समुन्मिषन्ति श्रमवारिबिन्दवो
नताङ्गि लावण्यसुधालवा इव ॥ ५० ॥

इतोऽवतंसोत्पललास्यदेशिके
निरन्तरं गन्धवहे वहत्यपि ।
न घूर्णते स्विन्नललाटसङ्गिनी
तवालकश्रेणिरियं मनागपि ॥ ५१ ॥

अनेन पीनस्तनकम्पदायिना
निरायतेनोद्वहता कदुष्णताम् ।
अथ प्रवालादपि पाटलच्छविर्
न दूयते निःश्वसितेन तेऽधरः ॥ ५२ ॥

उदित्य पङ्क्त्या श्रमवारिविप्रुषां
निरन्तराध्यासितरेखयाऽनया ।
तवैष कण्ठः कुटजावदातया
विलासमुक्तालतयेव भूष्यते ॥ ५३ ॥

इदं महच्चित्रममानुषं त्वया
विगाह्यते यद्वनमद्वितीयया ।

---

१. Tr. reads प्रयुक्तचूडाहि° for प्रसुप्तजूटाहि°. २. K. reads °सुधाकणा for °सुधालवा. ३. B. reads °दैशिके for °देशिके. ४. I. reads घुर्णति for घूर्णते. ५ I. reads ऽपरः for ऽधरः, probably it may ऽधरः. ६. I. reads तदेत्य for उदित्य. Tr. उदेत्य, while for the same K. उदित्वरेण for उदित्य पङ्क्त्या. ७. I. reads °विप्रुषो for °विप्रुषां.

इमाः क्व विन्ध्यस्य भुवोऽतिदुर्गमाः
क्व राजवेश्माभरणं भवादृशी[1] ॥ ५४ ॥

नवोद्गताशोकपलाशकान्तिना[2]
निकामनिर्यन्नखचन्द्रिकेण च[3] ।
बिभर्षि कस्येदमनेन पाणिना
वरा[4] ऽवधूतेन्दुमरीचि चामरम् ॥ ५५ ॥

नृपस्य कस्यापि परिच्छदाङ्गना
यदि त्वमुच्चैर्विभवो हि[6] कोऽपि[7] सः[5] ।
मरुत्पतिर्मेनकयेव तन्वि यस्
त्वयापि वालव्यजनेन वीज्यते ॥ ५६ ॥

[8]अथाधिमत्या परवत्यासि स्त्रिया
कयापि काऽसौ जगदेकसुन्दरी ।
नतभ्रु[1] यस्याः स्मरचापयष्टयो
विधेयतां यान्ति भवद्विधा अपि ॥ ५७ ॥

---

१. Tr. reads °वंशाभरणं भवादृशः for °वेश्माभरणं भवादृशी. K. reads त्वमीदृशी and T. भवादृशः for भवादृशी; while K. gives in marginal correction च ते वपुः for the same. २. T. reads वनो° for नवो°. ३. च is omitted by T. ४. Tr. reads रुचा° for वरा°. ५. T. reads परिच्छदाङ्गना यतिस्त्व° for परिच्छदाङ्गना यदि त्व°. ६. T. and B. read ऽपि for हि. ७. Tr. reads हि for ऽपि. ८. Tr. omits this whole and half of the next stanza :—

अथाधिमत्या परवत्यासि स्त्रिया
कयापि काऽसौ जगदेकसुन्दरी ।
नतभ्रु यस्याः स्मरचापयष्टयो
विधेयतां यान्ति भवद्विधा अपि ॥ ५७ ॥
परस्परस्पर्धि विलाससम्पदां
अयं भवत्स्वामितया विकल्प्यते ।.

१. B. reads नताङ्गि for नतभ्रु.

परस्परस्पर्धि विलाससम्पदां
त्रयं [1]भवत्स्वामितया विकल्प्यते ।
मरुत्वतो वा रमणी [2]रमाथ वा
कलत्रमर्धेन्दुविभूषणस्य वा ॥ ५८ ॥

[3]इयं परिभ्रान्तिरगेन्द्रकन्दरे
सखीव ते शंसति कार्यगौरवम् ।
[4]भवादृशः श्वापददूषितेऽन्यथा
चरन्त्यरण्ये किमधीतनीतयः ॥ ५९ ॥

अनेन खेलन्मददन्तिना वद
त्वमागता चण्डि कुतो [5]दुरध्वना ।
विधाय विश्लेषविषादमावयोः
स्वकार्यनिष्ठे कथय क्व यास्यसि ॥ ६० ॥

नायकवाक्यम् ।

इति साऽभिहिता मृगाऽऽयताक्षी
समुपोढप्रणयं यशोभटेन ।
सहसा [6]न जगाद लज्जया नु
श्रमतः किन्तु नृपस्तु [7]तामवोचत् ॥ ६१ ॥

---

१. I. reads तव for भवत्°; while T. तप° for the same. २. T. reads रमाधवा and कलंत्रमभ्रेन्दु° for रमाथ वा and कलत्रमर्धेन्दु° respectively. ३. B. does not insert this whole stanza :—

इयं परिभ्रान्तिरगेन्द्रकन्दरे
सखीव ते शंसति कार्यगौरवम् ।
भवादृशः श्वापददूषितेऽन्यथा
चरन्त्यरण्ये किमधीतनीतयः ॥ ५९ ॥.

४. T. reads भवादृशापाशविभूषितै for भवादृशः श्वापददूषिते°. ५. K. and Tr. read वनाध्वना for दुरध्वना. ६. T. reads निजगाद for न जगाद. ७. Tr. reads तामुवाच for तामवोचत् and corrects तामथोचे.

श्रान्तासि[1] कौतुकहृतेन[2] कदर्थितासि
प्रश्नैरनेन विहितो न तवोपचारः[3] ।
आतिथ्यमेष कुरुते परम[4]ङ्गलेखा-
संवाहनैकचतुरो निचुला[5]निलस्ते ॥ ६२ ॥

एवं निसर्गमधुरेण सुधारसैक-
निष्यन्दिना[6] फणिवधूरथ सा हसन्ती ।
चन्द्रांशुना कुमुदिनीव दिनोष्म[7]तप्ता
वीतक्लमा नरपतेर्[8]वचसा बभूव ॥ ६३ ॥

इति[9] श्रीमृ[10]गाङ्कदत्तसुनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पाटलादर्शनं नाम चतुर्थः सर्गः ॥ ४ ॥

---

१. Tr. and I. read भ्रान्तापि for श्रान्तासि. २. Tr. reads °वशेन for °हृतेन. ३. Tr. reads विहितोपनतोपचारः for विहितो न तवोपचारः. ४. Tr. reads कथम् for परम्. ५. B. and K. read मलया° for निचुला°. ६. I. reads °विच्युदिना for °निष्यन्दिना. ७. Tr. reads दिनेऽव° for दिनोष्म°; while T. reads कुमुदिनी-पवनोष्णतप्ता for कुमुदिनीव दिनोष्मतप्ता. ८. I. drops this Repha ( रेफ ). ९. T. reads wrongly इति कालिदासस्य कृतौ साहसाङ्कचरिते तृतीयःसर्गः This mistake has been done owing to the omission of the 3rd canto ( *vide* page 11 ). १०. Tr. reads इति परमलकृतौ नवसाहसाङ्कचरिते पाटलावलोकनो नाम चतुर्थः सर्गः, B. reads only चतुर्थःसर्गः and I. reads इति परिमलस्य नवसाहसाङ्कचरिते पाटलावलोकनश्चतुर्थः सर्गः.

## अथ पञ्चमः सर्गः ।



अथ सा वेदने नवेन्दुकान्ति-
स्मितमङ्के विनिवेश्य चामरं च ।
जगतीपतिमेवमा बभाषे
मसृणं मूर्तिमती विदग्धतेव ॥ १ ॥

त्वयि पुण्यवशेन दृष्टिमाप्ते
लभते शर्म गतश्रमो ममात्मा ।
उदिते हि विरोचने नलिन्या
विततमस्तामरसं विकासमेति ॥ २ ॥

अतिमात्रमुपोढसौकुमार्ये
वचसि श्रोत्रमुपेयुषि त्वदीये ।
झटिति प्रतिभासते ममायं
कठिनश्चन्दनपल्लवावतंसः ॥ ३ ॥

किमयं मयि सम्भ्रमोऽयमास्तां
किमयं नैव जनः परिच्छदस्ते ।
उपचारविशेषसंविधाने
प्रतिपच्चन्द्र इवोदितस्त्वमेव ॥ ४ ॥

---

१. K. and B. read वदनं for वदने. २. B. reads श्रितम् for स्मितम्. ३. K. reads भवनीपतिम् for जगतीपतिम्. ४. K. reads सा for °मा. ५. B. reads ह्यमात्मा for ममात्मा. ६. B. reads विततमःस्वरसं and gives marginal reading विततमस्कं सरसं for विततमस्तामरसं. ७. B. reads स्नेहमुपेयुषि and gives marginal reading श्रोत्रमुपेयुषि. ८. I. reads झगिति for झटिति. ९. K. reads चूतनवांकुरावतारः for चन्दनपल्लवावतंसः. १०. Tr. reads क्रियते for किमयं. ११. T. reads °सन्निधाने. for °संविधाने. १२. K. reads इवेक्षितः for इवोदितः.

भवदिङ्गितवेदिनैव[1] पृष्टा<br>
यदनेनाहमुपान्तवर्तिना ते ।<br>
किमु तत्कथयामि सम्मतं चेत्<br>
क्रियतां मे[2] स्वयमाज्ञया प्रसादः ॥ ५ ॥

नायकनिदेशः ।

अभिधेहि लवः कुतूहलस्य[3]<br>
त्वदुदन्तश्रवणे ममापि जातः[4] ।<br>
इति सावसुधापतेर्निदेशादथ<br>
पातालविलासिनी[5] जगाद ॥ ६ ॥

भुजङ्गलोकवर्णनम् ।

स तव[6] श्रुतिमात्र एव तावत्<br>
स्मरलीलाभवनं भुजङ्गलोकः ।<br>
उपयाति यदेकदेशसाम्यं<br>
न मही नापि पुरी[7] पुरन्दरस्य ॥ ७ ॥

अतिदुर्लभसूर्यभासि यस्मिं-<br>
स्तमसामुल्लसतां तिरस्क्रियायै ।<br>
फणिनोऽरुणकान्तिभिश्शिरस्थैर्<br>
मणिभिर्बालमिवातपं वहन्ति[8] ॥ ८ ॥

---

१. T. reads °इङ्गितवेदनेन and I. °इङ्गितवेदिनेव both for इङ्गितवेदिनैव. २. T. omits मे; while I. does not insert here मे, but it appears after आज्ञया in the marginal correction and Tr. substitutes नः for the same. ३. K. reads परं कुतूहलं यत् for लवः कुतूहलस्य. ४. K. जातं for जातः. ५. Tr. reads °निवासिनी for °विलासिनी. ६. T. reads तपःश्रुति° for तव श्रुति°. ७. B. and Tr. read पुरं for पुरी and T. and I. read पदं for the same. ८. B. reads वमन्ति for वहन्ति.

अनुलिम्पति रोदसी यथेन्दुः
प्रभया मां न तथेत्यसूययेव ।
पटु यः प्रमदाविलासहासै-
स्तबकैरिन्दुपरम्पराः प्रसूते ॥ ९ ॥

सविलासमुदस्तहस्तमुक्तैर्
निकरैर्दिग्द्विरदेन्द्रशीकराणाम् ।
परितो निचिताः सदैव यस्मिन्
ककुभस्तारकिता इवावभान्ति ॥ १० ॥

प्रतिभाति दधत् फणाकलापे
पृथिवीं यत्र स शेषनागराजः ।
नभसो निपतन् जवेन भित्त्वा
जगतीं गाङ्ग इव च्युतः प्रवाहः ॥ ११ ॥

भोगवतीवर्णनम् ।

विदिता खलु वासुकेस्त्रिलोक्यां
हरकण्ठाभरणस्य भोगिभर्तुः ।
ललिताद्भुतभूमिरस्ति तस्मिन्
नगरी भोगवतीति राजधानी ॥ १२ ॥

---

१. T. reads रोधसी for रोदसी, but it seems to be incorrect here. २. Tr. reads °विलासभासां for °विलासहास°, but appears in the marginal correction °कुलास्य° for °विलास°. ३. T. reads °कलाश्रियं and Tr. °कलाश्रिरं both for °परम्पराः; while I. reads इन्दुकलाः प्रसूयते for इन्दुपरम्पराः प्रसूते, and gives marginal correction which I am unable to find out. ४. I. reads °विभान्ति for °वभान्ति. ५. T. reads फणीकलापे for फणाकलापे, but most probably it is incorrect. ६. K. reads ऽभिपतन् for निपतन्. ७. I. reads त्रिलोक्याः for त्रिलोक्यां. ८. T. reads हरि° for हर°.

मणिहर्म्यतलानि रत्नदीपाः
फणिकान्तार्धविलोकितानि वीणाः[1] ।
ऋतवोऽप्यखिलाः समेत्य यत्र
स्मरसाम्राज्यमहाधुरं[2] वहन्ति ॥ १३ ॥

अनुपाधिरुपाहतो[3] विकासः
कमलैर्यत्र विलासदीर्घिकासु ।
अपि यत्र कुमुद्वतीभिरस्तैः[4]
सहजश्चन्द्रमरीचिपक्षपातः ॥ १४ ॥

अभिकानभिसर्तुमुद्यतः[5] सन्
सपदि व्यालविलासिनीसमूहः ।
भवति स्वफणामणिप्रदीपे
तिमिरोत्सारिणि यत्र साभ्यसूयः ॥ १५ ॥

अधिरोहति यत्र वंशमुक्ता-
पटलस्मेरतटा सुरस्रवन्ती ।
सरितः[6] श्रियमीर्ष्ययेव तस्याः[7]
सुवते मौक्तिकमेव यत्पयांसि ॥ १६ ॥

अतिकान्तिगुणाभिराममूर्तिर्[8]
मधुरेण ध्वनिना मनोहरन्ती[9] ।
विदधाति सदैव यत्र यूनां
पदमङ्के वनिता च वल्लकी च ॥ १७ ॥

---

१. Tr. reads वीथ्याम् and I. वीणा for वीणाः. २. I. T. and Tr. read भरं for °धुरं. ३. Tr. reads °रपाकृतो for °रुपाहतो. ४. K. reads कुमुद्वतैर्निरस्तः for कुमुद्वतीभिरस्तः. ५. T. reads अहिकान् for अभिकान्; while K. reads आधि कामुकसर्पणे प्रसक्तः for अभिकानभिसर्तुमुद्यतः सन् and B, substitutes अनुगन्तुम् for अभिसर्तुम्. ६. Tr. reads सलिलः for सरितः. ७. K. reads यस्याः for तस्याः. ८. K. reads अतिमात्र° for अतिकान्ति°; while I. अतिकान्त° for the same. ९. T. reads °हरान्ति for °हरन्ती.

शतशो विलसन्त्युदंशुरत्न-
स्तबकाः कल्पलता यदङ्गणेषु[1] ।
प्रतिमन्दिरमेवमेव यस्याम्
अपि चिन्तामणयः पदे[2] लुठन्ति ॥ १८ ॥

अपि दत्तकुतूहलाः सुराणाम्[3]
अपि वाञ्छापदमेकपिङ्गलस्य[4] ।
अपि निर्विषया[5] मनोरथानाम्
उरगान् यत्र विभूतयः श्रयन्ते ॥ १९ ॥

वसति स्वयमेव यत्र देवः
स सदा[6] कल्पितहाटकेश्वराख्यः ।
स्मरमूर्धविलोचनार्चिषीव[7]
त्रिपुरं यः शरपावके जुहाव ॥ २० ॥

शङ्खपालवर्णनम् ।

निजवंशविशेषकोऽस्ति तस्याम्
उरगाणामधिपः स शङ्खपालः ।
स्वगसाविति[8] यत्[9] फणासु धत्ते
वसुधां वासुकिना समानसारः ॥ २१ ॥

---

१. I. reads यदङ्गनेषु and T. यदङ्कणेषु for यदङ्गणेषु, but both seem incorrect. २. B. reads चिरं and I. and T. च ते both for पदे. ३. T. wrongly reads स्वराणाम् for सुराणाम्. ४. B. reads वाञ्छास्पदं for वाञ्छापदं. ५. K. reads कूलतरा for निर्विषया. ६. Tr. mutilates स सदा and shows the correction सहसा for स सदा. ७. K. reads °मूर्ध्व° and Tr. °मुच्च° for °मूर्ध°; while T. omits इव after °र्चिषि. ८. T. reads सृगराविति for स्वगसाविति through a mistake; while Tr. mutilates स्वगसाविति, but the corrector has inserted स्वभरावधि for it. ९. B. K. T. and Tr. read यः for यत्; while I. omits व in वसुधां and T. reads वसुधा for वसुधां.

शशिप्रभावर्णनम् ।

जगदेकललाम तस्य कन्या
गुणवत्यस्ति[1] शशिप्रभेति नाम्ना ।
सहसैव फणाभृतां प्रविष्टा
भुवने राहुभयादिवेन्दुलेखा ॥ २२ ॥

न कयाप्यतिशय्यते[2] प्रतिशीघ्रं
यदियं कन्दुककेलिषु भ्रमन्ती ।
अपरं कृतमर्थवत्तदस्याः
सुतरां नाम सखीभिराशुगेति ॥ २३ ॥

स्फुरदद्भुतरूपसम्पदं ताम्
अनुकर्तुं कलयापि धाष्टर्यमेति ।
न रतिर्न शची न चित्रलेखा[3]
न घृताची न तिलोत्तमा न रम्भा ॥ २४ ॥

सुर-किन्नर-सिद्धकन्यकाभिः
[4]स्वकलाभ्यासवतीभिराप्तसख्या ।
निखिलासु गता परं प्रकर्षं
शितधीः शैशव एव या[5] कलासु ॥ २५ ॥

अनिवारितकेलिकौतुका सा
सुतनुः स्नेहवशंवदेन[6] पित्रा ।
विहरत्यपचीयमानबाल्या[7]
हरशैले मलये हिमालये[8] च ॥ २६ ॥

१. T. reads भस्यं for अस्ति. २. K. reads कथा for कया. ३. T. has °रेखा for °लेखा. ४. B. and K. read सकलाभ्यासवतीभिरात्त° for स्वकलाभ्यासवतीभिराप्त.° .I. T. and Tr. read सा for या. ६. T. reads °वशं तेन for °वशंवदेन. ७. K. reads उपचीय° for अपचीय°. ८. T. and I. read हिमाचले for हिमालये.

अधुना पुनरत्र विन्ध्यपादे
विहरन्त्याः कुसुमावचूडनाम्नि ।
क्वचिदप्यगमत्पलाय्य तस्याश्
चपलः केलिमृगो मृगायताक्ष्याः ॥ २७ ॥

अतिवत्सलया समं सखीभिर्
विपिने तं परितस्तया विचित्य ।
पुलिने सरितः शशाङ्कसूतेः
भ्रमवत्येयमनीयत त्रियामा ॥ २८ ॥

कलहंसकलस्वनैर्विबुद्धा
परिवारप्रमदानिदेशितं सा ।
निकषा निचुलप्रवालशय्यां
तमथ प्रेक्षितवत्यवाप्तनिद्रम् ॥ २९ ॥

तपनीयशिलीमुखस्तदङ्के
चकितं चित्ररुचौ तया च दृष्टः ।
जलदे ललितेन्द्रचापभक्तौ
अहिमांशोरिव भासुरो मयूखः ॥ ३० ॥

अरविन्ददलत्विषा करेण
स्वयमुत्पाट्य सकौतुकं गृहीते ।
अवलोकितमेतयाथ तस्मिन्
विजयाङ्के नवसाहसाङ्कनाम ॥ ३१ ॥

---

१. B. reads एव for अत्र. २. B. I. and Tr. read कुसुमावचूल° for कुसुमावचूड°; while K. substitutes °धाम्नि for °नाम्नि. ३. T. and Tr. read °भूते for °सूतेः. ४. I. and T. read भ्रमवत्येव° and Tr. भ्रमवत्यैव for भ्रमवत्येय°. ५. T. reads निदर्शितं for निदेशितं. ६. T. reads °मधः for °मथ. ७. K. reads चित्ररुच: and substitutes सहसा for चकितं. ८. T. reads °जलिनेन्द्र° and K. °दलितेन्द्र° both for °ललितेन्द्र° and T. reads °भक्ता for भक्तौ. ९. K. reads भास्वरो for भासुरो. १०. T. I. and Tr. read °मुत्थाय for °मुत्पाट्य. ११. K. reads विजयाङ्कं for विजयाङ्के.

अविशन्नरनाथ नाम पूर्वं
हृदयेऽस्यास्[1]सहसाऽथ पुष्पकेतुः ।
[2]अमृतांशुमरीचिलुप्तनिद्रे
लभते यत् कुमुदेऽन्तरं द्विरेफः ॥ ३२ ॥

नवमेघमलीमसा[3]युगान्ते
वसुधामुद्धरतो रथाङ्गपाणेः ।
परितः श्रमवारिबिन्दवो ये[4]
निरपीयन्त पयोधिशुक्तियूथैः[5] ॥ ३३ ॥

[6]प्रकृतिः किल यस्य ते परीता
परिणामेन तदन्तरे[7]ऽत्र हंसः ।
शयनान्तगतं मृणालशङ्की
हृतवान्हारमधीरलोचनायाः ॥ ३४ ॥
(सन्दानितकम्[8] ।)

[9]उदडीयत खे मुखेन बिभ्रद्
भुजगेन्द्रप्रतिमं तमञ्जसा सः[10] ।
अपदार्थितवैनतेयशङ्कः
[11]फणिकन्यासु मुहूर्तविक्लवासु ॥ ३५ ॥

स च विन्ध्यवनान्तराजिमेताम्
अविशन्मारुतपीतपद्मगन्धाम् ।

---

१. K. reads स ततो यः and B. सहसैव, both for सहसाथ. २. B. reads शिशिरांशु° for अमृतांशु.° ३. B. and I. read पतन्तो for युगान्ते; while T. नवमेघमरीचिसात्पतन्तो for नवमेघमलीमसायुगान्ते. ४. Tr. reads °कधेः for ये. ५. T. reads °योधैः for °यूथैः. ६. T. and Tr. read प्रकृतिं for प्रकृतिः. ७. T. and I. read तमन्तरेऽत्र and Tr. समन्तरेस्य both for तदन्तरेऽत्र. B. and T. do not insert सन्दानितकम्. ९. T. reads उदधीयत for उदडीयत. १०. Tr. reads नः for सः. ११. K. reads फणिलोकेषु मुहूर्तविक्लवेषु and gives in the margin फणिदारासु मुहुर्विवर्तितासु for फणिकन्यासु मुहूर्तविक्लवासु.

अतिदूरविकृष्टनागकन्या-
चकितोदञ्चितदीर्घनेत्रमालः[1] ॥ ३६ ॥

[2]अहिराजसुतानिदेशतोऽस्मिन्[3]
[4]असमाप्तेषुविलोकनोत्सवोऽपि।
अथ हंसमितस्ततो विचेतुं[5]
विजने नागवधूजनः प्रवृत्तः ॥ ३७ ॥

शबलास्विह[6] कृष्णसारयूथैस्
समदक्रोडसनाथपल्वलासु[7]।
गहनास्वपि[8] तदन्वेषणार्थं
वनलेखासु मम स्वयं प्रयत्नः ॥ ३८ ॥

स मया न तटेषु[9] निर्झराणां
सरसां नाप्सु[10] न पुण्डरीकषण्डे।
सरसीष्वपि[11] नाथ्तोर्मिलेखा-
न्तरपारिप्लवसारसासु दृष्टः ॥ ३९ ॥

सितचामरधारणे[12] नियुक्तां
दुहितुस्तेन भुजङ्गमाधिपेन।
अवधारय पाटलेति नाम्ना
तनयां मामुरगस्य हेमनाम्नः[13] ॥ ४० ॥

१. K. reads °लील: and Tr. °मूलः for °मालः. २. T. reads अभिराज° for अहिराज°. ३. B. reads ऽयम् for ऽस्मिन्. ४. Tr. and K. read असमाप्तेष्ट° for असमाप्तेषु°. ५. T. reads विच्नेतुर् for विचेतुं. ६. K. and Tr. read शबलास्मसु for शबलास्विह and T. शबलाश्मसु for the same; while I. reads शबलास्मिन्, but has the last न् struck off and placed भु in its stead. ७. T. reads °पल्वलाम्भः for °पल्वलासु. ८. T. I. and Tr. read इह for अपि. ९. B. T. and I. read ऽपि for सु. १०. K. reads वाप्सु for नाप्सु; while T. न स्फुटपुण्डरीकषण्डे for नाप्सु न पुण्डरीकषण्डे. ११. Tr. reads च for ऽपि. १२. Tr. reads °धारणानियुक्तां for °धारणे नियुक्तां. १३. K. reads °धाम्नः for °नाम्नः.

अचले विचयैः पतत्त्रिणोऽयं[1]
फलितः साधु ममाहितश्रमो[2]ऽपि ।
यदितः पुरुषोत्तमोऽसि दृष्टो[3]
वनमध्ये निबिड[4]श्रियोपगूढः ॥ ४१ ॥

उपरोध[5]मिमं न मन्यसे चेत्
यदि वाऽस्मासु[6] तवास्ति पक्षपातः ।
वद तच्चरता क्वचिद्वनेऽस्मिन्
स[7] सहारो विहगस्त्वया नु[8] दृष्टः ॥ ४२ ॥

न स[9] दृष्टिमितस्तत्रापि मन्ये
तदहं तद्विचयादितो निवर्ते ।
ननु ताम्यति काममात्तचिन्ता
चिरयन्त्यां मयि सा ऽहिराजकन्या ॥ ४३ ॥

अथ वा मृगभङ्गिनोपनीते
विधिना सा नवसाहसाङ्कबाणे ।
प्रणयार्पितलोचना सनाम-
न्यधुनाऽ[10]प्यालिखितेव नूनमास्ते ॥ ४४ ॥

पुनरपि पाटलोक्तिः ।

इति सा समुदीर्य तत्पृषत्कान्
अवलोक्यैव पुन[11]श्चमत्कृतेव[12] ।

---

१. T. reads अचलेऽपि चलेऽपि यः पतत्त्रिणो for अचले विचयः पतत्त्रिणोऽयं. २. K. and I. read ममोदित° for ममाहित°; while B. समाहित° for the same. ३. T. wrongly reads दृष्टा for दृष्टो. ४. K. reads विरल° for निबिड° and T. and Tr. निबिडं for the same. ५. K. reads अपकारं for उपरोधं. ६. K. reads स्त्रीषु for ऽस्मासु. ७. Tr. reads न for स. ८. T. and I. read न and Tr. स, both for नु. ९. T. reads न for स. १०. Tr. reads °न्यसनेऽप्युल्लिखितेव for °न्यधुनाप्यालिखितेव. ११. I. reads पुरः for पुनः. १२. T. reads चमत्कृते च for चमत्कृतेव. I. also reads the same.

स्फुटकेलिमृगोपनीतबाण-
स्मरणस्मेरमुखी पुनर्जगाद ॥ ४५ ॥

स नृलोकशशी त्वमेव[१] मन्ये
मृगयाबद्धरुचिः स यत्पृषत्कः ।
भुवनाभयदायिनाममीषां
भवतः संवदतीव सायकानाम् ॥ ४६ ॥

स्थितमेतदयोमुखे[२]ष्वमीषु
स्फुटवर्णं तव नामधेयलक्ष्म[३] ।
अवनीतिलक त्वयि प्ररूढं
मम सन्देहलवं बलात् प्रमार्ष्टि ॥ ४७ ॥

समुपैति सनाथतां किमन्यत्
त्रितयेन त्रितयं नरेन्द्रचन्द्र[४] ।
त्रिदिवं नमुचिद्विषा त्वयेयं
वसुधा वासुकिना रसातलं च ॥ ४८ ॥

सनये नृपता[५]वखण्डिताज्ञे
त्वयि शासत्यवनीं दिलीपकल्पे[६] ।
विदधीत[७] पदं सुदुर्नये कस्
तमृते हारमलिम्लुचं[८] विहङ्गम् ॥ ४९ ॥

असतामसुहृन्न लज्जते[९]ऽयं
किमिति ज्याकिणलाञ्छितो भुजस्ते ।

१. Tr. reads मनुलोकशशी for स नृलोकशशी, K. स नृलोकशशिः and T. स नृलोकशशि° for the same. २. Tr. reads अधोमुखेषु for अयोमुखेषु. ३. K. reads °मेतत् for °लक्ष्म. ४. T. reads चन्द्रः for चन्द्र. ५. T. reads नृपतापखण्डिताज्ञैः for नृपतावखण्डिताज्ञे. ६. T. reads दिलीपकल्पः for दिलीपकल्पे ; while K. दिलीपतुल्ये for the same. ७. B. and K. read निदधीत for विदधीत. ८. I. reads °मलिम्लुचां for °मलिम्लुचं, but seems to have been corrected as °मलिम्लुचं.
९. I. and Tr. read रक्षते for लज्जते.

अवनौ यदनेन रक्षितायां
वयमस्यां मुषिताः[1] पतत्रिणाऽपि ॥ ५० ॥

अपयातु खगः स तेन कृत्यं
नहि मे[2] हारमिह त्वमेव याच्यः[3] ।
न दिशन्ति[4] किमत्र चोरलुप्तं
बत[5] षष्ठांशभुजो वसुन्धरायाः ॥ ५१ ॥

पथि चेदवतिष्ठसे प्रणीते
मनुना नाथ तदर्प्यतां स हारः ।
न नरेन्द्र भवादृशाः कदाचित्[6]
पदवीं न्यायविदां[7] विलङ्घयन्ति ॥ ५२ ॥

निजमर्थयसे शिलीमुखं चेत्
भवता[8] यत्नवताऽपि किं स लभ्यः ।
त्वमनागसि यच्छशिप्रभायाः
प्रहरन् केलिमृगे कृतव्यलीकः[9] ॥ ५३ ॥

अथ वा मृगयिष्यते न हारं
विशिखं दास्यति चोरगेन्द्रकन्या ।
त्वयि नेत्रपथातिथित्वमाप्ते
सुलभोऽस्या [10]हि महाजनोपरोधः ॥ ५४ ॥

---

१. I. omits the visarga; while K. reads हि हता for मुषिताः. २. Tr. reads नो for मे and K. किं for the same. ३. T. reads वाच्यः for याच्यः ; while I. °मिव त्वमेव याच्यः for °मिह त्वमेव याच्यः. ४. T. reads विशान्ति and K. वदन्ति both for दिशन्ति. ५. T. I. and Tr. read वसु for बत. ६. B. and K. read कथञ्चित् for कदाचित्. ७. B. and I. read न्यायविदो for न्यायविदां. ८. T. reads सह वास्तां भवतापि for भवता यत्नवतापि. ९. K, reads कृतापराधः for कृतव्यलीकः. १०. T. reads °ऽभि for हि and Tr. सभाजनोपरोधः for महाजनोपरोधः.

अतिदूरत एव दृश्यतेऽयं
स्वमिवाभ्युन्नतिमानितो नगेन्द्रः ।
वहति प्रणयोपरुद्धकूला
कलहंसैरमुमन्तरेण रेवा ॥ ५५ ॥

अमृतेन्दुकलासहोदरा ऽस्याः
सुतनुस्तीरतलेऽवतिष्ठते सा ।
उरसीव पयोधिराजकन्या
वनमालाभरणे रथाङ्गपाणेः ॥ ५६ ॥

तदितः स्वयमेव देव गत्वा
पुलिनं सोमभुवस्तरङ्गवत्याः ।
खगलुप्तविभूषणां क्षितौ ते
फणिराजेन्द्रसुतां विबोधयेहि ॥ ५७ ॥

सानन्दं नायकोक्तिः ।

इति तद्वचसा स्मरैकदूत-
प्रसवोल्लासवसन्तवासरेण ।
स नृपः कमपि प्रमोदमापत्
घनराजिध्वनिनेव नीलकण्ठः ॥ ५८ ॥

---

१. I. reads एष for एव; while K. and Tr. अतिदूरतमेव for अतिदूरत एव. २. B. reads अभ्युन्नति° for अभ्युन्नति°. ३. B. and K. read प्रणयावरुद्ध° for प्रणयोपरुद्ध°. ४. B. reads अमलेन्दु° and K. अमरेन्दु° both for अमृतेन्दु°. ५. Tr. reads °सहोदरी सा for °सहोदराऽस्याः. ६. Tr. reads ऽस्याः for सा. ७. Tr. reads °भरणा for °भरणे. ८. K. reads उदितः for तदितः. ९. B. T. and I. read निबोधय and Tr. विलोकय for विबोधयं. १०. T. reads °भूत° and I. °चूड° for °दूत°, while Tr. स्मरेषुभूत° for स्मरैकदूत°. ११. T. reads स कृपः for स नृपः; while I. substitutes किमपि for कमपि. १२. B. reads घनगर्जित° for घनराजि°; while T. reads पुनराजि° for the same through mistake.

अवदच्च विहस्य पार्थिवेन्द्रः
फणिराजेन्द्रसुतोविलासिनीं ताम्।
वचसोत्कयता मयूरशावान्
नवजीमूतनिनादसोदरेण ॥ ५९ ॥

अपि नाम मृदूनि वेत्सि वक्तुं
निपुणं न्यायमनुज्झती वचांसि।
प्रसभं विहितास्त्वया यदेते
वयमात्मस्खलितेऽपि सापराधाः ॥ ६० ॥

इदमोमिति गृह्यते वचस्ते
सह मेधाविनि कस्त्वया विवादः।
यदिमा विशदोद्गमा गिरस्ते
पथि सिद्धान्तसमीक्षिते चरन्ति ॥ ६१ ॥

तदनेन विनोदयाशु तावन्
मम हारेण मनः शशिप्रभायाः।
इह पल्वलसैकतेषु यावत्
तदलंकारमवेक्षितुं यतिष्ये ॥ ६२ ॥

---

१. T. reads °सुतां for °सुता°. २. I. reads विलासिनीनाम् for °विलासिनीं ताम्, but it can be believed that the letters नाम् are ताम्, and besides, नी has Anuswar in the correction. ३. B. reads मरीचि° for मयूर°. ४. B. T. and I. read अति° and Tr. अथ° for अपि°. ५. T. B. and I. read निपुणे for निपुणं. ६. Tr. reads स्वयं for त्वया; while T. adds हि after त्वया. ७. K. reads ननु for सह ; while Tr. reads कथमेकाकिनिनः for सह मेधाविनि कः and there appears in the correction, सह for कथ and मिनि for किनि in the reading. ८. B. reads विषमोद्गमा and Tr. विषमोद्गता both for विशदोद्गमा. ९. B. and K. read °समीहिते for °समीक्षिते ; while I. reads °समीक्षते for the same. १०. B. reads विलोभया° for विनोदया° and gives marginal reading विमोदया for the same; while K. reads तदलं विनिवेदयेशयासु तावत् for तदनेन विनोदयाशु तावन्. and B. interchanges this śloka to the next one. ११. K. reads तमहं हारहरं यतो न पश्ये and T. तमहं हारमवेक्षितुं यतिष्ये for तदलंकारमवेक्षितुं यतिष्ये.

हारप्रदानम् ।

अथ हारमनादरेण कण्ठात्
स्वयमाकृष्य स कृष्टचन्द्रशोभम् ।
विहसन्नरविन्दकोशताम्रे
निदधे[१] पाणितले विलासवत्याः ॥ ६३ ॥

अपि कोशगृहोदरे दुरापं[२]
फणिनां भर्तुरुपोढविस्मया सा[३] ।
तमुदञ्चितपक्ष्मणा मृगाक्षी
लिखितेनैव ददर्श लोचनेन ॥ ६४ ॥

शशिप्रभाहारधारणम् ।

अवकृष्य[४] सलीलमुत्तरीयात्
सितमेघादिव तारकावितानम् ।
उरसा स बभार हारमीशः[५]
स्तनपर्यङ्कशयं शशिप्रभायाः ॥ ६५ ॥

वदति स्म हसन् रमाङ्गदस्ताम्
उरगस्त्रीमथ भर्तुरिङ्गितज्ञः ।
यदि कौतुकवत्यमत्सरस्ते[६]
तदितः किञ्चिदितोऽवलोकयेति[७] ॥ ६६ ॥

अथ हारलताविकृष्टदृष्टिः[८]
सहसा[९] वारिविहङ्गमावलुप्तम् ।

१. K. reads विदधे for निदधे. २. B. reads कोशगृहे दुरापमेषा for कोशगृहोदरे दुरापं and T. कुशगृहोदरेन्दुरापं for the same ; while Tr. has this line thus—

अपि के......हार...दुरापं.

३. T. substitutes सु for सा through a mistake. ४. K. reads अनुकृष्य for अवकृष्य. ५. T. reads सार° for हार°. ६. B. reads अमत्सरा त्वं for अमत्सरस्ते. ७. B. reads °दिश° for °दितो° and T. I. and Tr. °दित्रा° for °दितो°. ८. K. reads °विसृष्ट° for °विकृष्ट°. ९. In Tr. there are two letters after सहसा mutilated.

उरगेन्द्रसुताविभूषणं[1] तन्[2]
नृपतेर्वक्षसि पाटला ददर्श ॥ ६७ ॥

पुनः पाटलावाक्यम् ।

दशनच्छदमात्तबिम्बशोभं[3]
स्नपयन्ती सुधयेव हासकान्त्या[4] ।
अवदच्च वचांसि[5] पार्थिवं सा
चतुरैवं परिहासपेशलानि ॥ ६८ ॥

अपहर्तुमगास्[6]त्वमेव हारं
किमितः कल्पितराजहंसरूपः ।
विदितोऽसि घना[7] तवोरगाणां
नगरेऽस्त्येव हि कामरूपवार्ता ॥ ६९ ॥

परवञ्चनपण्डिता[8] मतिस्ते
यदि नैवं कथमन्यथा नरेन्द्र[9] ।
इदमाभरणं हरस्यरण्ये
हरहासैकसितं शशिप्रभायाः ॥ ७० ॥

अवनीवलये त्वमात्तदण्डः
सहसे ना[10] ऽविनयांशमित्यवैमि ।
अथ च स्थितिमात्मना विधत्से
विषये दस्युनिषेविते किमेतत् ॥ ७१ ॥

---

१. T. reads °विभूषवन्तं for विभूषणं तन्. २. B. and I. read तं for तन्. ३. T. reads °मात्तचिम्बशोभं for °मात्तबिम्बशोभम्. ४. T. reads हारकान्त्या for हासकान्त्या. ५. T. reads चपलापि (पि ?) for च वचांसि. ६. T. reads °मना for °मगाः. ७. T. reads घनातपोरगाणां for घना तवोरगाणां; while Tr. reads विदितो हि for विदितोऽसि, and mutilates two letters afterwards. ८. T. reads परिवञ्चितपण्डितामितस्ते for परवञ्चनपण्डिता मतिस्ते. ९. T. reads नरेन्द्रः for नरेन्द्र. १०. T. reads नो for ना.

क्षितिप स्मयसे किमेष केलिर्
न भवत्यर्पय हारमस्मदीयम् ।
नयवर्त्मजुषो भवादृशाः किं
न परस्वग्रहणादिह त्रपन्ते ॥ ७२ ॥

अथवा परतोऽस्तु नर्म नास्यां
भुवि देवेन समोऽस्ति पार्थिवोऽन्यः ।
अपविघ्नया न यस्य दृष्टेर्
अपसर्पन्त्यथ खेचराः किमन्ये ॥ ७३ ॥

अनयोः किमपि त्वया विलासिन्
परिवर्तोऽयमकारि हारयोर्यः ।
वचसामवकाशमीश दत्ते
स न कस्यानृजुचेतसो जनस्य ? ॥ ७४ ॥

विहितो नहि वक्षसि त्वयाऽयं
नृप हारः फणिराजकन्यकायाः ।
किमपीप्सितमात्मनो विधातुर्
विहितं सूत्रमिदं मनोभवेन ॥ ७५ ॥

ननु याम्यमुना शशिप्रभायास्
तव हारेण मनो विनोदयामि ।

---

१. T. I. and Tr. read अपत्रपन्ते for इह त्रपन्ते. २. K. and Tr. read परत्वस्तु नर्मणास्यां for परतोऽस्तु नर्म नास्यां. ३. Tr. reads ऽस्तु for ऽस्ति. ४. Tr. reads किमस्य for किमन्ये ; while T. substitutes अथ for अपि. ५. T. reads अनया for अनयोः. ६. B. and K. read धत्ते for दत्ते. ७. Tr. reads न च राजन् for नृप हारः. ८. Tr. reads किमिवेप्सितं for किमपीप्सितं ; while B. Tr. and I. विधातुं for विधातुः. ९. T. reads नन यान्यमुना and Tr. ननु याम्बमुना both for ननु याम्यमुना ; while B. substitutes अधुना for अमुना. १०. B. and Tr. read विलोभयामि for विनोदयामि, but B. has in the margin विनोदयामि.

त्वयि साप्यलमेव सान्द्रचेतस्
सुतनुः स्नेहरसार्द्रतामुपैतु ॥ ७६ ॥

उचितं निजसायकानुरोधात्
अहिराजेन्द्रसुतोपसर्पणं ते ।
परतोऽस्तु शरस्त्वदर्थिता सा
किमु न त्यागवशंवदा ददाति ॥ ७७ ॥

सरसो ऽस्य विमुञ्च तीरलेखाम्
अनुरेवा पुलिनं गृहाण यात्राम् ।
उरगाधिपरूपपक्षपातं
शमय व्यालवधूविलोचनानाम् ॥ ७८ ॥

शशिप्रभादर्शनार्थं गमनम् ।

इति वल्गु वचो निशम्य तस्याः
स नृपः पन्नगवामलोचनायाः ।
स्थितमत्र वचस्यलङ्घनीये
तव कल्याणि मयेति तामुवाच ॥ ७९ ॥

अथ साऽनृजुवादिनी विधाय
क्षितिपालं पुरतश्चचाल बाला ।
हृदयेन परामर्मर्श चैवं
विलसन्मांसलविस्मयो नरेन्द्रः ॥ ८० ॥

---

१. Tr. reads साप्यलमेवमामन्चेतासि for साप्यलमेव सान्द्रचेतः; while T. reads this latter quarter of the stanza अतनून्मे हरसार्द्रतामुपैतु. २. B. reads उपैति for उपैतु and अतनुः for सुतनुः, but for the latter reading it has in the margin सु for अ. ३. T. reads अभि° for अहि°. ४. Tr. reads शरं तदर्थिता for शरस्त्वदर्थिता. ५. Tr. reads वशं मिशा for वशंवदा. ६. K. and Tr. read शमयन् for शमय. ७. B. T. and I. read °विलोचनेषु for °विलोचनानाम्. ८. I. reads कल्याण्मये° for कल्याणि मये°. ९. K. and Tr. read चचार for चचाल; while T. reads क्षितिपालपुरश्चचार for क्षितिपालं पुरतश्चचाल through a mistake. १०. I. drops one म and reads परामर्श for परामर्मर्श.

अरण्यानी क्वेयं[1] धृतकनकसूत्रः क्व स[2] मृगः
क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला ।
क्व तत् कन्यारत्नं ललितमहिभर्तुः क्व च वयम्
स्वमाकूतं धाता किमपि[3] निभृतं पल्लवयति ॥ ८१ ॥

अथ मदगजलीलाखेलगामी स कृत्वा
कनकविशिखयाञ्चाव्याजमव्याजकान्तः ।
अवनिहरिणलक्ष्मा[4] साहसोपार्जितश्रीः
अहिपरिवृढकन्यालोकनाय प्रतस्थे ॥ ८२ ॥

*इति श्रीमृगाङ्कगुप्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये[5] शशिप्रभावलोकनार्थप्रस्थानं नाम पञ्चमः सर्गः ॥ ५ ॥

---

१. T. reads क्वेयं for क्वेयं. २. B. reads च for स. ३. K. substitutes किमिति for किमपि and B. किमिव for the same; while T. and Tr. read निभृतः for निभृतं. I. also reads निभृतः, but has in the margin निभृतं. ४. K. reads °लक्ष्या for °लक्ष्मा. ५. Tr. reads इति परिमलस्य कृतौ नवसाहसाङ्कचरिते हारपरिवर्तो नाम, T. reads इति कालिदासस्य कृतौ साहसाङ्कचरिते and I. इति परिमलस्य नवसाहसाङ्कचरिते all for the whole quolophone.

# अथ षष्ठः सर्गः ।

## नायिकावस्थावर्णनम् ।

तदा फणीन्द्रकन्योऽपि बाणनामाङ्कसूचिते ।
नरेन्द्रतिलके तस्मिन्नभिलाषं बबन्ध सा ॥ १ ॥
सहसा हृदये तस्यां निदधे मन्मथः पदम् ।
अशोकयष्टिस्तबके सराग इव षट्पदः ॥ २ ॥
अवशा सा ऽभवच्चित्रं नाम्नापि पृथिवीपतेः ।
न तदस्त्यत्र यन्नास्त्रं सन्नद्धस्य मनोभुवः ॥ ३ ॥
स्मराग्निकणमेणाक्ष्यास्तस्याः समुददीपयत् ।
मकरध्वजसाम्राज्यसचिवो मलयानिलः ॥ ४ ॥
सोल्लसत्स्मरलीलेन नवेन वयसा बभौ ।
उन्मिषन्मधुलेखेन मुकुलेनेव मालती ॥ ५ ॥
सा ऽतनुश्वसनस्पृष्टपाटलाधरपल्लवम् ।
उवाह मुखमुज्जृम्भमम्भोजमिव पद्मिनी ॥ ६ ॥
निकामसरले तस्मिन् सा मुहुस्तरलेदृशौ ।

---

१. B. reads ऽसौ for ऽपि. २. T. reads बबाल (?) for बबन्ध. ३. I. reads तस्य for तस्यां; while B. K. and Tr. read विदधे for निदधे. ४. K. reads श्रुत्वापि for नाम्नापि. ५. Tr. reads स्मराङ्कुण° for स्मराग्निकण°; while T. स्मराग्निरण° for the same. ६. B. and K. read मुददीदिप for समुददीपयत्; while I. reads the same, but the letter प seems like य. ७. K. reads मारुतः सखा for मलयानिलः. ८. K. reads ऽपिच for बभौ. ९. T. omits the following portion :—

. . . . . . . . . . . . सा मुहुस्तरले दृशौ ।
द्वारे नरेन्द्रचन्द्रस्य चिक्षेप न सखीजने ॥ ७ ॥
नरेन्द्रनामाङ्कलिपिस्तामानन्दयति स्म सा ।
कुमुद्वतीमिवोदञ्चद्बालेन्दुकिरणच्छटा ॥ ८ ॥
हेमपुङ्खाङ्किते तस्मिन् . . . . . . . . . . । .

शरे नरेन्द्रचन्द्रस्य चिक्षेपे[1] न सखीजने ॥ ७ ॥
नरेन्द्रनामाङ्कलिपिस्तामानन्दयतिस्म सा ।
कुमुद्वतीमिवोदञ्चद्बालेन्दुकिरणच्छटा[2] ॥ ८ ॥
हेमपुङ्खाङ्किते तस्मिन् शरे करमुपेयुषि ।
बला[3]द्विवेश सा बाला दीक्षां वै[4]वाहिकीमिव ॥ ९ ॥
तेनावाप्ततदा[5]ताम्रपाणिस्पर्शेन[6] पत्रिणा ।
स्फुरत्कान्तिचयव्याजादमुच्यन्तेव पल्लवाः ॥१०॥
न[7]वीनसाहसाङ्कस्य कामदेवाकृतेरयम् ।
मालवैकमृगाङ्कस्य सिन्धुराजस्य सायकः[8] ॥११॥
पुनःपुनरिति स्वादु[9] नृपतेर्नामलक्ष्म सा ।
अ[10]पठच्चारुबिम्बोष्ठलुठद्दशनचन्द्रिका ॥ १२ ॥
सैन्दानितकम्[11] ।
अधीत्य कौतुकेनाथ कृतपञ्चममूर्च्छनाः[12] ।
तदग्रे[13] नृपनामाङ्कं जगुः[14] पातालकन्यकाः ॥ १३ ॥

---

१. Tr. and I. read मुमोच for चिक्षेप. २. B. K. and I. read °दञ्चद्-बालेन्दुकरण for °दञ्चद्बालेन्दुकिरण°. ३. After the letters बला I. does not insert the following portion:—

· · द्विवेश सा बाला दीक्षां वैवाहिकीमिव ॥ ९ ॥
तेनावाप्ततदाताम्रपाणिस्पर्शेन पत्रिणा ।
स्फुरत्कान्तिचयव्याजादमुच्यन्तेव पल्लवाः ॥ १० ॥
नवीन. . . . . . . . . . . ।,

but this portion appears in the marginal correction. ४. In K. the letter वै appears exactly like चै. ५. Tr. reads तेनापवत्ततदा° for तेनावाप्ततदा°. ६. B. reads पाणिपार्श्वेन for पाणिस्पर्शेन. ७. Tr. reads न (भू) मानेः for नवीन°. ८. B. reads भूपतेः for सायकः. ९. K. T. and I. read स्वादुदु for स्वादु. १०. B. reads अपसह for अपठद्, but gives in the margin अपठह for the same. ११. T. omits this. १२. T. reads °मूर्च्छनाम् and Tr. °मूर्च्छना both for °मूर्च्छनाः. १३. B. and K. read उदग्र° for तदग्रे; while Tr. समग्रे for the same. १४. Tr. reads जगौ पातालकन्यका for जगुः पातालकन्यकाः.

अदृष्टेऽप्युत्सुका राज्ञि[1] तद्गीतेन बभूव सा ।
प्रबोधे[2] यदनङ्गाग्नेः पञ्चमः प्रथमा समित् ॥ १४ ॥

अवेपत समुन्मीलद्विलासकुसुमाञ्चिता[3] ।
मनोभवानिलस्पर्शवशाद्वनलतेव[4] सा ॥ १५ ॥

नवानुरागभङ्गेन[5] व्यक्तचिह्नचुम्बिना ।
विनावचनमाचख्यौ सखीषु चतुरासु सा ॥ १६ ॥

शशिप्रभायाः प्रश्नः ।

सावहित्थमथेत्थं सा सखीजनमभाषत ।
सुधानिष्यन्दजडया शरदिन्दुमुखी गिरा[6] ॥१७॥

अभेदमिन्दुना नीतः सांनिध्यं[7] मेनकेतुना ।
सख्यः[8] कः सिन्धुराजोऽयं साहसाङ्को[9] निरूप्यते ? ॥१८॥

किमेव भवतिष्ठध्वे[10] मौनं मुञ्चत शंसत ।
उन्मीलति यदन्तर्मे[11] बलात्कौतुककन्दली ॥१९॥

माल्यवत्या उत्तरम् ।

अथ माल्यवती नाम तत्सखी सिद्धकन्यका ।
इति स्मितसुधार्द्रेण वचसा तामवोचत[12] ॥२०॥

---

१. K. and Tr. read °कारा for राज्ञि. २. T. reads प्रबोधयद° for प्रबोधे यद°. ३. K. reads °ञ्चितैः. for °ञ्चिता. ४. K. reads वनलताङ्कैः for वनलतेव सा. ५. B. reads °सङ्गेन for °भङ्गेन, but in the margin it gives °भङ्गेन and Tr. reads °मङ्गेन and corrects °भङ्गेन. ६. K. reads तदा for गिरा; while Tr. substitutes °मुखा for °मुखी. ७. T. Tr. and I. read सामान्यं for सांनिध्यं. ८. T. reads सख्यं for सख्यः. ९. T. reads सहासाङ्को for साहसाङ्को; while B. substitutes निगद्यते for निरूप्यते. १०. B. reads भवतिष्ठध्वं for भवतिष्ठध्वे. T. भव तिष्ठध्वे and Tr.° ममतिष्ठे हे for the same; while I. substitutes, भव for भव°. ११. B. and I. read उन्मीलतीयमन्तर्मे for उन्मीलति यदन्तर्मे and T. is quite mistaken here. It reads उन्मीलतीयमन्तं मे बलात् for उन्मीलति यदन्तर्मे बलात्. १२. K. reads °मभाषत for °मवोचत, but gives the reading in the margin °मभाषत.

सखि साहसिकः सोऽयमवन्तितिलको नृपः।
गीयते के[1]तकापाण्डु य[2]स्योरगपुरे यशः ॥२१॥
तं काश्यपीसहस्राक्षमद्राक्षमहमेकदा।
गता श्रीमन्महाकालपर्वण्युज्जयिनीं पुरीम् ॥२२॥
तन्वि तिग्मांशुनेव द्यौर्निशेव शशलक्ष्मणा।
सा सनाथा पुरी तेन वज्रिणेवामरावती ॥२३॥
रम्भा त्वयेव यत् सत्यं तेनाऽऽलि नलकूबरः[3]।
त्याजितो रूपजं [4]गर्वमुर्वीमकरकेतुना ॥२४॥
अकलङ्काकृतेस्तस्य चतुःषष्टिकलाव[5]तः।
[6]तुलाधिरोहहेवाके कः षोडशकलः शशी ॥२५॥
तस्यावनिप्रदीपस्य [7]ते ते नैसर्गिका गुणाः।
क्व नाम न प्रकाशन्ते रवेरिव मरीचयः ॥२६॥
न नागेषु न सिद्धेषु न नरेष्वमरेषु [8]च।
अवापि क्वापि संवादस्तद्रूपोल्लेखरे[9]खया ॥२७॥
स[10] हि केनापि कृत्येन गां ग[11]तः श्रूयते पुनः।
निह्नुतैकभुजद्वन्द्वो देवः श्रीवत्सलाञ्छ[12]नः ॥२८॥
कि[13]मन्यत्तव सन्तुष्ट्यै पश्य चित्रे लिखाम्यहम्।
चिरस्य दीर्घनयने तवास्तु नयनोत्सवः ॥२९॥

---

१. T. reads कैतका° for केतका°. २. K. reads यस्यानङ्गपुरे for यस्योरगपुरे. ३. T. reads नलकूबरम् for नलकूबरः. ४. K. reads रूपसौभाग्य° for रूपजं गर्व°. ५. K. reads °कलाभृतः for °कलावतः. ६. T. reads कः षोडा शकलः शशी for कः षोडशकलः शशी; while Tr. तुलाधिरोहणे साङ्कः for तुलाधिरोहहेवाके. ७. K. and T. read स्वैरं for ते ते. ८. K. reads °ष्वथ for °षु च; while Tr. and T. substitute न for च. ९. K. reads तद्रूपोच्चयलेखया and Tr. तद्रूपालेख्यलेखया both for तद्रूपोल्लेखरेखया. १०. K. reads सखि for स हि. ११. K. reads °नागा-गतः for °न गां गतः. १२. K. reads °लोछनः for °लाञ्छनः. १३. B. T. and Tr. read किमत्यन्तमसन्तुष्टे and I. किमन्यत्तमसन्तुष्टे both for किमन्यत्तव सन्तुष्ट्यै.

आकृतिलेखनम् ।

अथ सा सिद्धतनया तं लिलेख शिलातले ।
हृदि तुरंगराजेन्द्रदुहितुर्मीनकेतनः ॥३०॥
तदोल्लिखितभूपालं तया चिन्तितकामदम् ।
चिन्तामणेरप्यधिकं शिलातलममंस्त सा ॥३१॥
ततश्चित्रगते तस्मिन् महीपाले मदालसाः ।
सममेवाहिकन्यानां पेतुर्नेत्रपरम्पराः ॥३२॥
पपौ शशिप्रभाप्येनं चिरमुत्पक्ष्मलेखया ।
पुनरुक्तीकृतोन्निद्रकर्णेन्दीवरया दृशा ॥३३॥
रूपमास्वादयामास तस्याऽऽलेख्यगतस्य सा ।
भ्रमरीवारविन्दस्य सुधासहचरं मधु ॥३४॥
आनीयताकुलत्वं सा त्रितयेन तनूदरी ।
विस्मयेनातिसान्द्रेण मदेन मदनेन च ॥ ३५ ॥
विवेश हृदये तस्याः स चित्रलिखितो नृपः ।
शरत्प्रसन्ने सरितः प्रतिमेन्दुरिवाम्भसि ॥ ३६ ॥

---

१. T. I. and Tr. substitute च for तु. २. Except K. all others read मीनकेतनम् for मीनकेतनः. ३. T. reads तथा for तदा. ४. K. T. and Tr. read तदा for तया; while Tr. substitutes चित्तेन for चिन्तित°. ५. B. reads °ममन्यत for °ममंस्त सा. ६. Tr. does not give the following two stanzas :—

ततश्चित्रगते तस्मिन् महीपाले मदालसाः ।
सममेवाहिकन्यानां पेतुर्नेत्रपरम्पराः ॥ ३२ ॥
पपौ शशिप्रभाप्येनं चिरमुत्पक्ष्मलेखया ।
पुनरुक्तीकृतोन्निद्रकर्णेन्दीवरया दृशा ॥ ३८ ॥.

७. T. reads मदालसा for मदालसाः. ८. T. reads परम्परा for परम्पराः. ९. B. reads स्वैनं for °प्येनं. १०. K. reads उत्फुल्लया दृशा for उत्पक्ष्मलेखया. ११. T. reads पुनरुक्तिकृतोन्निद्रः for पुनरुक्तीकृतोन्निद्र° and substitutes या दृ° for °या दृ°. १२. Tr. and I. read अनी° for आनी.° १३. T. reads तमोदरी and Tr. तलोदरी both for तनूदरी; while I. तरूदरी for the same. १४. B. reads हृदयं for हृदये and K. reads चित्रालिखितो for चित्रलिखितो.

स्तनपत्रलतां तस्या बिभेद पुलकोद्गमः ।
सत्यं यदन्तरङ्गेण बहिरङ्गो निरस्यते[1] ॥ ३७ ॥
तस्याः कुचयुगे किञ्चिन्निश्वासः कम्पमादधे[2] ।
रथाङ्गनाममिथुने सायन्तन इवानिलः ॥ ३८ ॥
तस्याः स्वेदलवश्रेणिच्छद्मना वदनश्रिया[3] ।
वि[4]शतोऽन्तरनङ्गस्य लाजाञ्जलिरिवोज्झितः ॥ ३९ ॥
शार्ङ्गं शर[5]मृजूकुर्वन् ददृशे मन्मथस्तया[6] ।
यत् सा मृदुक्वणत्काञ्चिकिङ्किणीकमकम्पत ॥ ४० ॥
एष दृष्टस्त्वयेत्युक्त्वा[7] सख्या सा साध्वसाकुला ।
गद्गदाक्षरमव्यक्तं[8] कृच्छ्रात् प्रतिवचो ददौ ॥ ४१ ॥
चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि[9] ।
व्रीडार्धवलितं[10] चक्रे मुखेन्दुमवशेव सा ॥ ४२ ॥
दृष्टा सखीभिस्साकूतं सा बालाधरपल्लवे ।
दधौ वैलक्ष्यहसितं प्रसूनमिव माधवी[11] ॥ ४३ ॥
नैवं[12] प्रेम नवोत्कण्ठा नवास्ते ते मनोरथाः ।
इति तस्यास्तथैवा[13]भूदन्तरङ्गः परिच्छदः[14] ॥ ४४ ॥

---

१. K. reads निवार्यते for निरस्यते. २. B. and T. read °माददे for °मादधे, but in B. marginal correction appears °मादधे. ३. B. reads वदने श्रिया and K. वदनश्रियः both for वदनश्रिया. ४. B. I. and Tr. read विशतोऽङ्गमनङ्गस्य for विशतोऽन्तरनङ्गस्य. ५. Tr. reads शरं मृदूकुर्वन् for शरमृजूकुर्वन्; while T. reads शरमृजुः कुर्वन् for the same. ६. B. reads तथा and K. तदा both for तया, but in B's. marginal correction there appears तया. ७. K. reads °त्युंक्त्वा for °त्युक्त्वा. ८. K. reads अव्याजं and T. अव्यक्तः both for अव्यक्तं. ९. T. adds हि before चित्र, but it is unnecessary here. १० B. reads व्रीडाविवलितं, but in the margin व्रीडाविगलितं for व्रीडार्धवलितं; while T. व्रीडार्धचरितं for the same and K. reads in the margin व्रीडाधवलितं. ११. Tr. reads मालती for माधवी and B. प्रसून इव for प्रसूनमिव. १२. T. reads चर्म for नवं through a mistake. १३. B. and K. read तदैव for तथैव. १४. K. reads अन्तरङ्गपरम्परा for अन्तरङ्गपरिच्छदः.

किञ्चित्त्रपा[1]नुविद्धेन पुण्डरीकदलत्विषा ।
तमानर्चैव राजेन्दुमनिमित्तस्मितेन सा ॥ ४५ ॥
सा च[2] दोःशायितभुवा नृपेणाध्यासिता हृदि ।
कृताङ्गभङ्गवलना झटिति[3]त्यालस्यमाययौ ॥ ४६ ॥
तत्क्षणेनैव सा चित्रं तन्वी[4] तन्मयतां ययौ[5] ।
कं न[6] प्रतारयत्येष कितवः कुसुमायुधः ॥ ४७ ॥
स्तिमितेवा[7]वतस्थे सा सारङ्गायतलोचना ।
अचेतनेव शून्येव सुप्ते[8]वालिखितेव च[9] ॥ ४८ ॥
स्मरेण मर्मणि क्वापि साऽविध्यत सुमध्यमा ।
अनिद्रितापि यत् साऽभूत् क्षणं मुकुलितेक्षणा ॥ ४९ ॥
व्यञ्जितानङ्गलीलेन[10] शृङ्गाररसबन्धुना[11] ।
तन्वी नवानुरागेण सान्यैव[12] घटिताऽभवत् ॥ ५० ॥
ऋजु नैक्षत यच्चित्रं[13] यदभूच्च त्रपावती ।
तेनाति[14]गूढभावापि सा सखीभिरलक्ष्यत[15] ॥ ५१ ॥
अथानङ्गवती नाम सखी तामित्यवोचत[16] ।
दशनज्योत्स्नयाऽरण्यं सुधयेव निषिञ्चती ॥ ५२ ॥
कच्चिदस्य[17] प्रमोदाय कुमुदस्येव चक्षुषः ।
अयं मध्यमलोकेन्दुः[18] पातालेन्दुकले तव ॥ ५३ ॥

---

१. T. reads °त्रुपविद्धेन for °नुविद्धेन. २. Tr. reads दोर्भ्यां साधित° for च दोःशायित°. ३. I. reads झगिति for झटिति. K. also the same. ४. T. reads तन्वि for तन्वी. ५. B. reads in the margin नयौ for ययौ. ६. I. reads किं for कं, but corrects कं. ७. T. I. and Tr. read स्तिमितैवा° for स्तिमितेवा°. ८. Tr. reads लुप्ते and K. छन्ने both for सुप्ते. ९. I. reads वा for च. १०. K. T. and Tr. read °लीलेव for °लीलेन. ११. B. reads °बन्धुरा for °बन्धुना. १२. T. reads सान्येव for सान्यैव. १३. K. and T. read छन्नं for चित्रं. १४. B. reads तेनाऽथ for तेनाऽति°. १५. K. reads °रलुब्धत for °रलक्ष्यत. १६. T. reads तां प्रत्यवोचत् for तामित्यवोचत्. १७. K. reads °हस्ति for °दस्य. १८. I. reads °लोकेन्द्रः for °लोकेन्दुः.

वनानिलाहतोन्निद्रपद्मकेसरशालिना ।
रोमोद्गम इवानेन धृतस्त्वदवलोकनात् ॥ ५४ ॥

अद्य नः सफलं चक्षुश्चित्रे यदवलोकितः ।
कन्दर्पाधिककान्तोऽयमवन्तिमृगलाञ्छनः ॥ ५५ ॥

त्वामप्यवञ्चितां मन्ये यत्त्वयैतस्य वक्षसि ।
एते सविभ्रमं न्यस्ते दृशौ मुक्तालते इव ॥ ५६ ॥

जितमेतेन को ऽप्येष सत्यं कामोऽस्य किङ्करः ।
आरोहति परां कोटिमत्र यत् तव सम्भ्रमः ॥ ५७ ॥

त्वमत्र बद्धभावेव किमिन्दुमुखि लज्जसे ।
विलङ्घयत्यलङ्घ्यानि स्मरदुर्ललितानि कः ॥ ५८ ॥

कोऽन्यः सखि नृशंसो ऽस्ति कामं विषमबाणतः ।
सुकुमारे तवाऽप्यङ्गे येन व्यापारितः शरः ॥ ५९ ॥

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेऽप्येषं मृगशावाक्षि लक्ष्यते ॥ ६० ॥

एकेन राजहंसेन हृतो हारस्तनूदरि ।
अनेन तु द्वितीयेन लिखितेनापि ते मनः ॥ ६१ ॥

कुतस्त्रपा तवालीषु किञ्चिदुन्नमयाननम् ।
अहो बत त्वमेतस्मिन्नत्यायतकुतूहला ॥ ६२ ॥

---

१. B. Tr. and I. read °हतो° for °हृतो°. २. B. reads °शोभिना for °शालिना and K. and Tr. °रेणुना for the same. ३. B. reads °शपि for °धिक°. ४. K. reads विधिनैतस्य for यत्त्वयैतस्य; while B. °प्यवाच्छितं for °प्यवञ्चितां. ५. K. reads यत्ते for एते. ६. Tr. reads जातं for जितं. ७. T. reads आरोहन्ति and सम्भ्रमाः for आरोहति and सम्भ्रमः respectively. ८. K. reads °भावेन for °भावेव; while T. किमिन्दुमुख° for किमिन्दुमुखि. ९. T. reads सुखि for सखि. १०. K. reads एवं for एष. ११. Tr. reads तलोदरि for तनूदरि.

एतत्कर्णोत्पलं लोलमपाङ्गप्रतिवेशितम्[1] ।
त्वदुदन्तमिवैतस्य कथयत्यलिकूजितैः ॥ ६३ ॥

अहो दूरस्थितेनापि हृदि स्पृष्टा नृपेन्दुना ।
इन्दुकान्तशिलेव[2] त्वमार्द्रतामवगाहसे ॥ ६४ ॥

निपुणे[3] निःश्वसिष्येवमतिगूढं[4] यथा यथा ।
तथा तथा तव व्यक्तमयमुच्छ्वसति[5] स्मरः ॥ ६५ ॥

स्मितमेतदलोलाक्षि[6] लज्जासंवलितं तव ।
इदं निर्जितबाल्यस्य यौवनस्योदितं[7] यशः ॥ ६६ ॥

यथा तवेयमरतिर्यथा सुतनु वेपसे ।
तथा क्वचित्तः[8] शङ्के निःशङ्कं मदनस्त्वयि ॥ ६७ ॥

किमत्र करवै गाढमाकल्पकमिदं[9] तव ।
इयं च मन्मथस्यास्त्रं निर्गता चूतमञ्जरी ॥ ६८ ॥

सुरतक्लान्तशबरीकबरीमाल्यचुम्बिनः[10] ।
कथमेते त्वया तन्वि सह्या मलयवायवः ॥ ६९ ॥

किं ताम्यसि तवोपान्तमानयाम्यधुनैव तम् ।
इत्याश्वासयतीव त्वां कोकिलोऽयं[11] कलस्वनः ॥ ७० ॥

कूजन्ती कोकिलवधूरियमाधिं धुनोति[12] ते ।
अनङ्गनृपसाम्राज्यलीलामङ्गलगायिनी[13] ॥ ७१ ॥

---

१. B. reads °विनिवेशितम् I. °प्रतिवेशिते both for °प्रतिवेशितम्; while T. °प्रतिवेशितैः for the same. २. B. and T. read °कान्ति° for °कान्त°. ३. T. and Tr. read निपुणा and K. निपुणं both for निपुणे. ४. B. reads °गूढे for °गूढं°. ५. I. and Tr. read उच्छ्वसिति for उच्छ्वसति. ६. I. T. and Tr. read °मेतश्च लोलाक्षि for °मेतदलोलाक्षि. ७. K. reads नवं यशः for उदितं यशः. ८. K. reads संनिहितः for क्वचित्तः. ९. T. reads °मायल्लक° for °माकल्पक° and Tr. the same, but they do not convey good sense. १०. T. Tr. and I. read °मुरलीकपोलपरिचुम्बिनः for °शबरीकबरीमाल्यचुम्बिनः. ११. B. K. T. and I. read कोकिलैयं कलस्वना for कोकिलोऽयं कलस्वनः. १२. T. Tr. and I. read धिनोति for धुनोति. १३. K. reads °गायिकी for °गायिनी.

वनान्तदेवतावामपादन्यासोत्सवः स्फुटम् ।
एष स्तबकितोऽशोकः सुहृत् कामस्य का गतिः ॥७२॥
अत्रोर्वीतिलके दृष्टिमस्यन्तीं तिलकः क्रुधा ।
अयं तर्जयतीव त्वां वाताधूतलताङ्गुलिः ॥ ७३ ॥
पथि स्मरस्य विषमे स्खलितायामितस्त्वयि ।
स्मितच्छटेव निर्याति सिन्दुवारस्य मञ्जरी ॥ ७४ ॥
द्राघयत्यस्तबिम्बोष्ठरुचिनिःश्वसितानि ते ।
अयं मुकुलितः किञ्चिद्बकुलो मुकुलस्तनि ॥ ७५ ॥
लतया कर्णिकारस्य पुरः पुष्पितया ऽनया ।
अनङ्गस्यैकराज्येऽस्मिन् हैमवेत्रलतायितम् ॥ ७६ ॥
अहो न कस्य भिन्दन्ति हृदयं वीक्षिता अपि ।
निसर्गमृदवोऽप्येते सहकारनवाङ्कुराः ॥ ७७ ॥
चतुरां कोकिलामेषं कृत्वा कुरबको मुखे ।
दुर्लभं याचतीव त्वां लीलालिङ्गनदोहदम् ॥ ७८ ॥
अशोकस्कन्धलग्नेयं कुसुमैर्नवमाधवी ।
प्रार्थनीयप्रियस्पर्शां हसति त्वामिवोत्सुकाम् ॥ ७९ ॥

---

१. T. reads अनात° for वनान्तः°. २. Tr. mutilates first six letters of this line and then reads दृष्टिं मुह्यन्तीं तिलके क्रुधाः for दृष्टिमस्यन्तीं तिलकः क्रुधा. ३. K. reads सखि for त्वयि. ४. B. reads निर्याता for निर्याति. ५. T. reads द्रावयाति, K. श्लाघयति and gives in the marginal reading लाघयति for द्राघयति; while Tr. reads द्राघयन्त्यस्ताबिम्बोष्ठरुञ्चि for द्राघयत्यस्तबिम्बोष्ठरुचि° and °बिम्बोष्ठं किञ्चित्. T. °बिम्बोष्ठं रुची and I. °बिम्बोष्ठकाञ्चित् for °बिम्बोष्ठरुचि°. ६. I. reads पुनः for पुरः; while B T. पुष्टितया for पुष्पितया. ७. T. reads °स्वैव for °स्यैक°. B. and K. substitute हि for ऽपि. ८. I. reads चतुरीं and Tr. चतुरं both for चतुरां. ९. K. reads कुरबकः पुरः for कुरबको मुखे. १०. Tr. [illegible] त्वलीला° for त्वां लीला°. ११. K. reads °मालती for °माधवी. १२. B. I. सखि. [illegible]r. read °उत्सके for उत्सुकाम्; while K. substitutes °स्पर्शां for स्पर्शां.

भूपतावनुरक्तायास्तव सन्तापदीपनम् ।
स्थलारविन्दं सत्येव सूते[1] सखि वसुन्धरा ॥ ८० ॥

अमीष्वङ्कस्थकन्दर्पजगद्विजयसिद्धिषु ।
दृष्टिरुद्विजते तन्वि पाटलाकुङ्मलेषु[2] ते ॥ ८१ ॥

सुन्दरि[3] द्वितयस्यात्र कृशिमा भूषणायते[4] ।
राजन्या[5]बद्धभावायास्तव रात्रेश्च सम्प्रति ॥ ८२ ॥

एष चैत्रोत्सव[6]श्चित्रे नृपोऽयं नूतनं वयः ।
प्राप्तावकाशः कामोऽपि पतितास्यति[7]सङ्कटे ॥ ८३ ॥

किमालिखितवत्येषा चित्रे माल्यवती नृपम् ।
द्वारीकृते[8]यमथ वा वामेन विधिना तव ॥ ८४ ॥

बहुना किं चकोराक्षि छलितासि[9] मनोभुवा ।
सर्वथा[10] ते करिष्यन्ति कुशलं कुलदेवताः[11] ॥ ८५ ॥

इत्यादि व्याहरन्ती सा कृतभ्रूभङ्गया[12] तया ।
नरेन्द्रबाणपुङ्खेन कुचे किञ्चिदतुद्यते[13] ॥ ८६ ॥

कलावतीवचनम् ।

अथ किन्नरराजेन्द्रकन्या नाम्ना कलावती ।
एवं वचः स्मितसुधानिषिक्ताक्षरमाददे[14] ॥ ८७ ॥

---

१. T. and Tr. interchange places of सूते and सखि; while T. mutilates the letter ते after सू. २. B. reads कुम्नलेषु, but gives to the margin कुड्मलेषु for कुड्मलेषु. ३. T. omits this whole line:—

सुन्दरि द्वितयस्यात्र कृशिमा भूषणायते ।.

४. Tr. and I. read कोरकायते for भूषणायते. ५. B. reads राजन्य° for राजन्या°, but gives marginal reading राजन्या°; while I. reads रजन्या° for the same, but it is to be supposed by a mark on the top of र that it is रा. ६. T. reads चैत्रोद्भव:. for चैत्रोत्सवः; while K. नेत्रोत्सवः. for the same. ७. T. reads श्यति for °स्यति°. ८. B. reads द्वारे कृते°. and T. द्वारीकृते° both for द्वारीकृते.° ९. T. reads चलितासि and Tr. चरितासि both for छलितासि. १०. T. reads सर्वधा for सर्वथा. ११. B. and K. read वनदेवताः for कुलदेवताः १२. T. I. and Tr. read °भेदया for भङ्गया. १३. I. and Tr. read °तुद्यत for तुद्यत. १४. T. reads आदधे for आददे.

कामं दुर्लभमेवैतच्चैत्रश्चन्द्राङ्किता निशाः ।
प्रेयान्विपञ्चीरणितं पञ्चशाणाङ्कितं वयः ॥ ८८ ॥

अयि त्वां म्लापयत्येष कालः कमललोचने ।
जगदाल्हादजनकः सुधासूतिरिवाब्जिनीम् ॥ ८९ ॥

स्थाने तवानुरागोऽयमनङ्गस्यायमुत्सवः ।
सखि स्निह्यति निर्व्याजमिन्दावेव कुमुद्वती ॥ ९० ॥

नृपस्यारण्यसञ्चारः शरेणानेन सूच्यते ।
मरुता द्विरदस्येव मदनिष्यन्दगन्धिना ॥ ९१ ॥

अवश्यं तन्वि चिन्वाना वने हंसामितस्ततः ।
क्वचिद्विलोकयिष्यन्ति तं त्वत्परिजनस्त्रियः ॥ ९२ ॥

ज्ञातत्वदिङ्गितैर्वात्र तं चेद्द्रक्ष्यति पाटला ।
ततोऽस्य षट्पदस्येव बलाच्चेतो हरिष्यति ॥ ९३ ॥

स्थिरा भव नृपेन त्वमिह संयोगमाप्स्यसि ।
यथा कण्वाश्रमे पूर्वं दुष्यन्तेन शकुन्तला ॥ ९४ ॥

इति तद्वचसः सीम्नि मसृणोत्कम्पितस्तनी ।
व्याजसाचीकृतमुखं निशश्वास शशिप्रभा ॥ ९५ ॥

वनश्रीरत्नमञ्जीरो लताकुञ्जोदरे ततः ।
चुकूज मञ्जुकण्ठस्तां दक्षिणेन कपिञ्जलः ॥ ९६ ॥

---

१. T. and Tr. read चैत्रश्चन्द्राङ्किता for चैत्रश्चन्द्राङ्किता. २. Tr. reads पञ्चबाणाञ्चितं and T. and. I. पञ्चबाणार्चितं both for पञ्चबाणाङ्कितं. ३. T. reads अपि नु ल्हापयति for अयि त्वां म्लापयति ; while I. reads त्वा for त्वां. ४. Tr. reads स्निह्यसि निर्व्याजमिन्दाविव for स्निह्यति निर्व्याजमिन्दावेव ; while T. reads °मिन्दावे च for °मिन्दावेव through mistake. ५. I. reads °विष्यन्द° for °निष्यन्द°. ६. B. reads °वासं for हंसं and K. reads हंसं, but in the margin reads वासं. ७. K. reads सत्यं for क्वचित्. ८. T. reads °त्वयाहिं-चितैर्वात्र (?), Tr. त्वदिङ्गिता वात्र and I. °त्वदिङ्गिते वात्र. all for °त्वदि-ङ्गितैर्वात्र. ९. K. reads एष्यसि for आप्स्यसि १०. Tr. reads °मुखी for °मु-खं. ११. I. reads मञ्ज° for मञ्जु° and T. तं for तां.

हर्षाश्रुलवकीर्णेन सत्पत्रावलिचारुणा ।
वामेन पस्फुरे तस्याश्चक्षुषा च स्तनेन च ॥ ९७ ॥
अत्रान्तरे समायान्ती ददृशे दूरतस्तया ।
नरेन्द्रसवितुस्तस्य पुरः सन्ध्येव पाटला ॥ ९८ ॥
तस्यास्त्रये च त्रितयमपश्यत्फणिकन्यका ।
मुखे स्मितं करे हारं सितमंसे च चामरम् ॥ ९९ ॥
सा हारहस्ता रुरुचे धृतस्तिमितचामरा ।
सरसी सुप्तहंसेव फेनाध्यासितपङ्कजा ॥ १०० ॥
दृष्टिः फणीन्द्रदुहितुरतिक्रम्यैव पाटलाम् ।
भृङ्गश्रेणिरिवाशोके पपातावन्तिभर्तरि ॥ १०१ ॥
प्रियं नः सोऽयमायाति पश्य पश्य शशिप्रभे ।
परमारान्वयोदारहारमध्यमणिर्नृपः ॥ १०२ ॥
इति प्रियसखीसूक्तिसुधानिष्यन्दलेखया ।
सिक्ते तदाऽभवत्तस्याः स्मरः पल्लवितो हृदि ॥ १०३ ॥

सन्दानितकम् ।

सुधारस इवोर्वीभृत्तया सम्मुखमापतन् ।
दृशा स्फटिकशुक्त्येव वारंवारमपीयत ॥ १०४ ॥

---

१. T. reads °लावकीर्णेन for °लवकीर्णेन. २. T., Tr. and I. read पुस्फुरे for पस्फुरे. ३. Tr. reads ऽथ for च. ४. T. reads ततः for तया. ५. I. reads °कन्यकाः for °कन्यका. ६. B. reads स° for सा, but gives in the margin सा; while T. reads सा हारस्ता विरुरुचे for सा हारहस्ता रुरुचे. ७. Tr. mutilates two letters before स्तिमित. ८. Tr. reads सरसीव लसद्धंसा for सरसी सुप्तहंसेव. ९. K. reads मीनाध्यासित° for फेनाध्यासित°, but gives marginal reading फेनाविलस्त°. १०. B. and K. read °क्राम्येव for °क्रम्यैव. ११. B. reads प्रियो यः and in the margin प्रियो यः for प्रियं नः ; while K. प्रियस्से for the same. १२. T., Tr. and I. read °सूक्त° for °सूक्ति°; while I. substitutes °विष्यन्द° for °निष्यन्द°. १३. T. and Tr. do not insert this. १४. K. reads निभृतं समपीयत for वारंवारमपीयत.

वितेने ऽस्योहि[1]कन्याभिः कौतुकेनातनीयसा ।
तस्याग्रे राजहंसस्य नेत्रे[2]न्दीवरवागुरा ॥ १०५ ॥
अवान्तितिलकोदन्तमुपसृत्या[3]थ पाटला ।
अनङ्गदी[4]पनं तस्यै जगादेङ्गितवेदिनी ॥ १०६ ॥
देव पश्चात्स्थितो ऽप्यग्रे प्राप्तः पर्यु[5]त्सुको भवान् ।
इत्यभा[6]ष्यत भूपालश्चित्रे चतुरया तया ॥ १०७ ॥
अभूत् पर्याकुला सा च मुहूर्तमसितेक्षणा ।
पश्चादलज्जतालीभिस्तथा[7] सस्मि[8]तमीक्षिता ॥१०८॥
[9]तस्यै हारं महीभर्तुरर्पयामास पाटला ।
आकृष्य मू[10]र्तमानीतमतिशुद्धमिवाशयम् ॥ १०९ ॥
सखीनामनु[11]रोधेन सा किलानङ्गमोहिता ।
हृदि दीर्घगुणं दध्रे हारं प्रियमिवाप[12]रम् ॥ ११० ॥
तुषारपाण्डुना तेन ववृधेऽस्या मनोभवः ।
दिगन्तवा[13]न्तज्योत्स्नेन महोदधिरिवेन्दुना ॥ १११ ॥
पु[14]ष्पोद्गमेनेव लता प्रसादेनेव भारती ।
सा तेन रेजे हारेण यशसेव नरेन्द्रता ॥ ११२ ॥

---

१ T. substitutes °भि° for °हि°. २. T. reads नेन्त्रेतीवरया गुरा (?) for नेत्रेन्दीवरवागुरा. ३. B. reads °स्मृत्या° for °सृत्या°. ४. K. reads °दीपने तस्याः for °दीपनं तस्यै. ५. K. reads पर्याकुलः कथम् for पर्युत्सुको भवान्. ६. T. reads इत्याभाष्यत for इत्यभाष्यत ; while Tr. mutilates two letters before चतुरया. ७. Tr. reads °लिस्तु तया for °लिभिस्तथा. ८. K. reads सम्मित° for सस्मित°. ९. K. and Tr. read कस्य for तस्यै. १०. B. reads आकृष्य मूर्तमायात°, K. आकृष्यमूर्तमाभात° and Tr. आकृष्टमुक्तमानीत° all for आकृष्य मूर्तमानीत° ; while Tr. substitutes °शुभ्र° for °शुद्ध°. ११. B. reads °मुप° for °मनु°. १२. K. reads प्रियमिवागतम् for प्रियमिवापरम् and substitutes हृदा for हृदि. १३. K. reads दिगन्ताक्षिप्त° for दिगन्तवान्त°. १४. K. reads वृन्तोद्गमेनेव for पुष्पोद्गमेनेव ; while शर्वरी for भारती.

ततश्शिथिलपर्यस्तविलोलकबरीलता ।
केतुयष्टिरिव श्यामपताकाङ्का हिरण्मयी ॥ ११३ ॥
वसंतकमलोल्लासिमत्तभ्रमरनिःस्वना ।
दीपमानोपदेशेव स्वरहस्ये मनोभुवः ॥ ११४ ॥
उल्लसत्कुटजाच्छाच्छविलासहसितच्छविः ।
झटित्युदधिवेलेव निर्गच्छदमृतच्छटा ॥ ११५ ॥
सरोजिनीव हंसीभिर्भृङ्गीभिरिव मालती ।
शशिलेखेव ताराभिस्सखीभिरभितो वृता ॥ ११६ ॥
दृष्ट्वा नरेन्द्रमायान्तमुदस्थादुत्सुकाथ सा ।
दधती नूतनप्रेमपरिणीतामधीरताम् ॥ ११७ ॥
कुलकम् ।

अथ सुतनुरलोलतारके सा सुचिरमुदञ्चितदीर्घपक्ष्ममाले ।
शशिन इव नवोद्गतस्य दूरात् अवनिपतेःपथि लोचने मुमोच॥११८॥

आसन्नानुचरधृतेन पङ्कजिन्याः
पत्रेण स्फुटघटितातपत्रलीलः ।
स च्छायामथ महसा हसन्हिमांशोः
क्ष्मापालः पुलिनमवाप नर्मदायाः ॥ ११९ ॥

इति श्रीमृगाङ्कसूनोः परिमलापरनाम्नःपद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभादर्शनो नाम षष्ठः सर्गःसमाप्तः॥६॥

---

१. K. reads °रिवाभूत् सा for °रिव श्याम°. २. B. T. and I. read वहंस° for वसंत°; while Tr. reads °कमलोल्लासे for °कमलोल्लासि. ३. K. and Tr. read सरहस्य° for स्वरहस्ये. ४. B. and I. read उच्छलत्°, T. and Tr. उच्चलत् for उल्लसत्°; while T. is quite mistaken here. ५. T. reads धृता for वृता. ६. Tr. and I. read द्रष्टुं and T. द्रष्टुः for दृष्ट्वा. ७. T., Tr. and I. do not insert कुलकम्. ८. K. reads पक्ष्मलेखे for पक्ष्ममाले. ९. B. reads सच्छायापथ° and Tr. सज्जायामथ for स छायामथ; while Tr. substitutes सहसा for महसा. १०. B. reads षष्ठः सर्गः for the whole colophon. T. इति परिमलापरनाम्नो महाकवेः कालिदासस्य कृतौ साहसाङ्कचरिते पञ्चमः सर्गः, Tr. reads इति परिमलस्य कृतौ नवसाहसाङ्कचरिते नरेन्द्रदर्शनो नाम षष्ठः सर्गः. I. reads the same, but omits कृतौ and नाम.

# अथ सप्तमः सर्गः ।

शशिप्रभादर्शनम् ।

ततः स दूरादहिराजकन्यकां
[1]जवैकमित्रेण युतां [2]पतत्त्रिणा ।
विशाम्पतिर्दीर्घगुणानुषङ्गिणीम्
अनङ्गकोदण्डलतामि[3]वैक्षत ॥ १ ॥

उपोढलावण्यतरङ्गभङ्गया
[4]सरागबिम्बोष्ठगलत्प्रवालया ।
अहारि [5]लोलं नृपतेस्तया बलात्
अनङ्गरत्नाकरवेलया मनः ॥ २ ॥

रमाङ्गदकृतं शशिप्रभावर्णनम् ।

[6]सविस्मयो लोचनमार्गमाप्तया
तया स पाता[7]लतलेन्दुलेखया ।
अथेत्थमम्लानमनोरथोद्गमो
रमाङ्गदेनाभिदधे नराधिपः ॥ ३ ॥

अवैमि सैवेयममोघमायुधं
मनोभुवः पन्नगराजकन्यका ।
[8]उदंशुलेखेन मुखेन कुर्वती
जगत् [9]विलीनेन्दुविलोकनस्पृहम् ॥ ४ ॥

---

१. T. reads जवेक for जवैक. २. Tr. reads स्वपात्रिणा for पतत्रिणा. ३. B. reads °वैच्छत for °वैक्षत. ४. I. reads सुराग° for सराग°. ५. K. reads सद्यो for लोलं. ६. B. reads सविस्मयालोकन° for सविस्मयो लोचन° and reads in the margin च for क. ७. K. reads °तलेन्द्रकन्यया for °तलेन्दुलेखया. ८. B. reads तदंशु° for उदंशु°. ९. K. and Tr. read निलीनेन्दु° for विलीनेन्दु°.

नरेन्द्र सत्यं स कुतूहली भवेद्  
अलौकिकं रूपमवेक्षितुं रतेः ।  
इयं न यस्यातिथितां गता दृशोर्  
अगाधलावण्यसरित् सुमध्यमा ॥ ५ ॥

इयं सुधा मुग्धविलासजन्मभूर्  
इयंभुजङ्गालयरत्नदीपिका ।  
इयं जगन्नेत्रचकोरचन्द्रिका  
पुरःपताकेयमयुग्मपत्रिणः ॥ ६ ॥

इयत्तया मुक्तमवैमि नैपुणं  
प्रजापतेरद्भुतशिल्पकर्मणि ।  
नृपोपमानामुपमानतां गतं  
विनिर्मितं येन हि रत्नमीदृशम् ॥ ७ ॥

इयं तवानेन विराजतेतराम्  
करस्थितेनावनिपालपत्रिणा ।  
उपेयुषा काञ्चनपद्ममंशुना  
हिमेतरांशोरिव जन्हुकन्यका ॥ ८ ॥

अस्यैव श्लोकस्य पाठान्तरम् ।

---

१. B. reads तादृक् स for सत्यं स and T. substitutes न for स. २. K. reads सुधापगा for सुमध्यमा. ३. B. and K. read °सिक्त° for °मुग्ध°; while Tr. mutilates the following :—

इयं सुधामुग्धविलासजन्म. ।.

४. K. reads भुजङ्गाङ्गण° for भुजङ्गालय°. ५. B. reads शुक्तं, T. शुद्धं and K. शून्यं all for मुक्तं; while Tr. इयं न मा शुल्कं for इयत्तया मुक्तं. ६. Tr. reads °रूप° for °शिल्प°. ७. K. reads नृपोत्तमानां for नृपोपमानां. ८. T. reads तेन for येन. ९. Tr. reads उप ––– का° for उपेयुषा का°. १०. Tr. reads हित–मा° for हिमेतरां°.—* This does not appear in any manuscript except K.

अरालकेशीयमनेन भाति ते
शरेण कार्तस्वरपुङ्खशोभिना ।
निसर्गगौरेण नरेन्द्ररश्मिना
सकज्जला दीपशिखेव शार्वरी ॥ ९ ॥

इयं विलासोर्मिनिमग्नशैशवं
विभाव्यमानस्तनकुड्मलोद्गमम् ।
मदैकविलम्भगृहं विगाहते
वयो विभक्ताङ्गमनङ्गदोहदम् ॥ १० ॥

इयं नताङ्गी जगदेकसुन्दरे
निदेशिते पाटलया नृप त्वयि ।
दृशौ नवेन्दीवरपत्रपेशले
विमुञ्चति श्रीरिव शार्ङ्गधन्वनि ॥ ११ ॥

अनङ्गसाम्राज्यविलासचामरे
वनानिलव्याकुलितेऽस्य कुन्तलेऽनि ।
परिश्लथे संयमनार्थमेतया
सलीलमस्तः कबरीभरे करः ॥ १२ ॥

---

१. K. reads मराल° for अराल°. This stanza is another reading of the preceding one and is of the author himself. २. T. reads °रौरेण for °गौरेण . and K. °शुभ्रेण for the same. ३. B. and I. read शर्वरी for शार्वरी. After this stanza Tr. gives the following :—

॥ अथ प्रभावामन्तरम् ॥

and I. inserts:— अथ पाठान्तरम् ॥

४. K. reads विविक्ताङ्ग° for विभक्ताङ्ग° and T. °दोहदम् for °दोहदम्. ५. I. and T. read °सुन्दरं, B. and K. °सुन्दरी for °सुन्दरे. ६. K. reads निवेशिते for निदेशिते. ७. K. reads पेलवे for पेशले ; while T. °धन्वना for °धन्वनि. ८. T. reads व्याकुलितांस° for व्याकुलितेऽस° I. also reads the same, but corrects व्याकुलितेंस° for व्याकुलितेंस°.

विलोकयन्ती कुसुमं कथाप्रसङ्गा[1]
च्युतं कुचस्पर्शधियेव वक्षसि ।
इयं कृशाङ्गी कुसुमास्त्रशङ्कया
कृतप्रणामेव तवावलोक्यते ॥ १३ ॥

विलोकयास्या[2]: क्षितिपाल बिभ्रतीं[3]
प्रदीपशोभां कबरीं निशामुखे[4] ।
अमी[5] मुहुः कुङ्कुमकेसरारुणा
लसन्ति सीमन्तमणेर्मरीचयः ॥ १४ ॥

विराजते[6] ऽस्यास्तिलको ऽयमञ्चितो
विकुञ्चित[7]भ्रूलतिकान्तरे नृप ।
विजित्य लोकद्वितयं दिवं प्रति
स्मरेण बाणो धनुषीव संहितः[8] ॥ १५ ॥

अपाङ्गसंवर्धित[9]शोणकान्तिना
सुकृष्णतारेण तुषारपाण्डुना ।
इयं प्रवालासितरत्न[10]मौक्तिकैर्
विनिर्मितेनेव चकास्ति चक्षुषा ॥ १६ ॥

इयं पुरो निर्यतिदूरमायते
कपोलतः काञ्चनकुण्डलार्चिषि[11] ।

---

१. T. reads °च्युतः for च्युतं°. २. Tr. reads अस्य for अस्याः. ३. Except K. all read बिभ्रतः for बिभ्रतीं. ४. Tr. reads कबरीं निशामुखे for कबरीनिशामुखे and I. also reads the same. ५. From the word अमी up to the end of this canto, the complete 8th, and the 9th cantoes, and the first 38 stanzas of the 10th canto, and of the 39th stanza up to वनायमणिधाम्निलिष्ठयाम्. The intermediate portion is lost in B.; while T. substitutes अमू for अमी. ६. T. reads विलासते for विराजते. ७. Tr. reads विमुञ्चति for विकुञ्चित°. ८. K. reads सन्धितः for संहितः. ९. I. reads °संवर्गित°, T. °संवर्जित°, and Tr. °संसर्गेण° all for °संवर्धित°. १०. T. reads प्रवालो सितरक्त° for प्रवालासितरत्न°. ११. T. reads °कुण्डलार्चिषा for °कुण्डलार्चिषि; while in I. on the top of षि there appears a star-like mark, and it may be a reading of षि.

इषुं रुषेव प्रतिमोक्तुमुद्यता
मनोभुवे[२] मुक्तशिलीमुखे हृदि ॥ १७ ॥

इयं त्रियामापतिकान्तिपेशलं
विबुद्[३]बन्धूकदलाधिकत्विषा ।
बिभर्ति बिम्बाधरमुद्रया मुखं
मनोभिरामं रजनीव सन्ध्यया ॥ १८ ॥

उपोढतारापति[४]तार[५]हारयोर्
इयं युगेन स्तनयोर्विराजते[६] ।
द्वयेन देवो[७]ऽसि चक्रवाकयोस्
सरिद्वहीतिकमृणालयोरिव ॥ १९ ॥

सुरापगावीचि[८]विपाण्डुरेष ते
चिरेण हारश्चरितार्थतां[९] गतः ।
धृतः क्षितीश प्रणयार्द्रयाऽनया
सलील[१०]मुत्कम्पिनि यत्कुचद्वये ॥ २० ॥

इयं महीपाल विलोकितेन ते
[११]विमोहते कान्तमिदं दशान्तरम् ।
भवत्यनारूढविकासविभ्रमा[१२]
किमुद्गमे चन्द्रमसः कुमुद्वती ॥ २१ ॥

---

१. T. reads इमं and K. इयं for इषं. २. I. reads मनोभवे for मनोभुवे; while Tr. reads मनोभुवा and corrects मनोभवे. ३. Tr. reads विमुक्त° for विबुद्ध°. ४. Tr. reads °ताराधिप° for °तारापति°. ५. In. I. the letter ता is visible, but it seems that the corrector has made it वा. ६. T. has विसंज्ञुते for विराजते, but it seems quite meaningless. ७. K. reads कस्यो° for देवो°. ८. The original reading of Tr. is not recognizable. The corrector reads °फेन for °वीचि°; while T. reads स्वरापगा for सुरापगा. ९. K. and T. read चारितास्मतां for चरितार्थतां. १०. Tr. reads सहेल° for सलील°. ११. The MS. Tr. mutilates first ten letters in this line. १२. T. reads °विभ्रमात् किमुद्गते चन्द्रकुमुद्वतीव for °विभ्रमा किमुद्गमे चन्द्रमसः कुमुद्वती.

किमन्यदुक्तं सुधयेव सान्द्रया
तदन्यथा नाथ न पाटलावचः ।
स्फुटेयमस्याः कुरुते यदङ्कके
बलात्परिष्वङ्गमनङ्गविक्रिया ॥ २२ ॥

शशिप्रभासमीपगमनम् ।

इतीङ्गितज्ञे वदति प्रियंवदे
रमाङ्गदेन स्मितमुद्गतस्मितः ।
अवाप पर्याप्तशशाङ्कदर्शनः
फणीन्द्रकन्यासविधं नराधिपः ॥ २३ ॥

नायिकाचेष्टाः ।

उवाह लज्जानतमञ्चितालकं
ततो भुजङ्गाधिपतेः सुतामुखम् ।
अवाञ्चितं किञ्चन मातरिश्वना
सषट्पदं पद्ममिवारविन्दिनी ॥ २४ ॥
पतत्यधः कुङ्कुमपङ्कपाटले
मयूखलेखापटले शिखामणेः ।
ह्रियेव रक्तांशुकपल्लवस्तया
पिधातुमालिख्यनृपे न्यधीयत ॥ २५ ॥

---

१. In Tr. this stanza appears as follows:—

क्रिमन्यदु – – वृतन्यथानया
म पाटलायाः स्फुटयेव – – – ।
– – – – – – – – – – – – – – –
– – – – – ङ्गमनङ्गविक्रिया ॥ २१ ॥

२. T. reads °मुक्तं for °दुक्तं. ३. K. reads स्यामहि पाटलावचः for नाथ न. पाटलावचः. ४. K. reads °स्मिते for °स्मितः. ५. T. reads पर्यन्त° for पर्याप्त°. ६. K. reads सविधे धराधिपः for सविधं नराधिपः. ७. T. reads विधातु° for पिधातु°. ८. I. reads नृपं for नृपे and T. नृपं न्यधीयत for नृपे न्यधीयत.

नृपस्य चित्रे मधुरेयमाकृतिर्
न भिद्यते चन्द्रमसो यथाम्भसि।
सखीजनस्तामिति नर्मपेशलञ्
शनैस्त्रपानम्रमुखीमभाषत ॥ २६ ॥

यथास्मि वेत्कासि तथास्य भूपतेर्
यदा पुनः कर्णसमीपमाप्स्यसि।
इतीव निर्व्याजमुदीर्य तत्यजे
तयायताक्ष्या स नरेन्द्रसायकः ॥ २७ ॥

अलं ह्रियैवं समुपेक्ष्य गृह्यताम्
अयं हि पाणिग्रहणोचितस्तव।
इतीरयन्त्याः कुटिलं वचः कराद्
अनङ्गवत्याः कमलं जहार सा ॥ २८ ॥

अथ स्वबिम्बाधरपाटलच्छदं
करेण तत्तत्सदृशेन बिभ्रती।
निषेवितुं भूपतिमभ्युपागता
रमेव राजीवमुखी रराज सा ॥ २९ ॥

---

१. Tr. reads मम केय° for मधुरेय°. २. I. reads वक्रासि for वत्कासि. ३. Tr. reads यथा for यदा. ४. K. and T. read कण्ठ° for कर्ण°. ५. K. reads समुदीक्ष्य for समुपेक्ष्य. ६. I. reads इतीरयस्याः for इतीरयन्त्याः. ७. T. reads ह for सा and K. तद् for the same. ८. I. originally omits the following portion which it gives in the correction:—

करेण तं तत्सदृशेन बिभ्रती।
निषेवितुं भूपतिमभ्युपागता
रमेव राजीवमुखी रराज सा ॥२८॥
दृशस्ततस्तत्परिवारयोषितां
सरं . . . . . . . . .

दृशस्ततस्तत्परिवारयोषितां
नेत्राञ्जनश्यामलपक्ष्मराजयः ।
शशिप्रभे भूमिपतौ सकौतुकास्
समापतन्कुन्द इवालिपङ्क्तयः ॥ ३० ॥

नृपार्हणम् ।

निपीयमानस्य तया शनैश्शनैर्
अपाङ्गसञ्चारितदीर्घनेत्रया ।
उपात्तपुष्पः क्षितिभर्तुरर्हणां
चकार तस्याश्चतुरस्सखीजनः ॥ ३१ ॥

पुरः शिरस्याहितमन्मथाज्ञया
तया कटाक्षैः कुटजैरिवार्चितः ।
नृपस्सपर्यां पुनरुक्तसंविदां
स तद्वयस्यानिहितावमन्यत ॥ ३२ ॥

सरागवत्युत्कलिकाभिराकुले
मृदुन्यलं पाटलया समर्पिते ।
अथ न्यषीदन्नवपल्लवासने
फणीन्द्रकन्यामनसीव पार्थिवः ॥ ३३ ॥

अनुक्षितीशं नलिनीदलासने
कयाचिदस्ते परिवारयोषिता ।

---

१. T. reads संजन्न° for नवाञ्जन, but it seems meaningless and omits one letter in this line. २. K. reads राजयः for पङ्क्तयः. ३. K. reads पुनः for पुरः. ४. I. and T. read संविधां for संविदां ; while I. substitutes पुर° for पुन° and Tr. mutilates six letters before दां. ५. T. reads वयस्यापिहितावमन्यत for वयस्याविहितावमन्यत. ६. In I. original reading is मृदुन्यलं; but the corrector has made it ममन्यलं. ७. K. reads समार्थिते for समर्पिते. ८. K. and Tr. read भूपतिः for पार्थिवः. ९. T. reads °दलानने. for °दलासने. १०. In Tr. there appears a correction कयापि दस्ते for कयाचिदस्ते ; while T. °दास्ते for °दस्ते. ११. I. and Tr. read ऽप्यहिवारयोषिता for परिवारयोषिता.

रमाङ्गदोऽप्यासनबन्धमाददे
वसुन्धरायां विनयैकबन्धुरः[1] ॥ ३४ ॥

[2]श्रमानुरोधादुपविश्यतामितः
क्षणं कृशाङ्गीति[3] सखीभिरर्थिता ।
[4]उपाविशद्देपितवामनस्तनी
ततस्समं[5] ताभिरहीन्द्रकन्यका ॥ ३५ ॥

नायिकाविलसितानि ।

[6]विवर्तयन्ती वदनेन्दुमण्डलं
विशालनेत्रान्तनिषक्ततारकम्[7] ।
[8]द्वयेन सा कृष्यत सुन्दरी समं[9]
ह्रिया नृपालोकनकौतुकेन च ॥ ३६ ॥

अथावतंसीकृतलोचनोत्पलं
कपोलदोलायितरत्न[10]कुण्डलम् ।
चिरं पपौ[11] स स्तिमितेन चक्षुषा
तदाननं मालवमीनकेतनः[12] ॥ ३७ ॥

कृती दृशाऽस्यास्सुदृशः पिबत्ययं
कपोललावण्यसुधां नराधिपः ।

---

१. K. reads °बन्धनः for °बन्धुरः. २. K. reads आत्मा° T. अमा° both for श्रमा°. ३. T. reads क्षताङ्गी° for कृशाङ्गी°. ४. Tr. mutilates two letters after उपाविश° and reads °द्वामनस्तनी; it may be उपाविशत्तावद्वामनस्तनी. ५. Tr. reads समानाभिः for समं ताभिः. ६. T. reads विवृत्तियन्ति for विवर्तयन्ति. ७. I. reads °निषिक्ततारका and T. °विषक्ततारका both for °निषक्ततारकम्. ८. Tr. mutilates first two letters and corrector inserts for them भये°. ९. K. reads द्वयोः for समं. १०. I. and T. read °हेम° for °रत्न°. ११. I. reads ददर्श स्तिमितेन, T. तदर्शास्तिमितेन and K. ददर्शास्तिमितेन all for पपौ स स्तिमितेन. १२. K. reads °शारदञ्जनः for °मीनकेतनः.

मिथस्सखीनामिति सस्मितं वचो
निशम्य साऽभूदधिकाधिकत्रपा ॥ ३८ ॥
मनागिवांसादपवर्तिताननाः
निरीक्ष्य तं भूपतिमर्पितेक्षणम् ।
विहस्य लज्जामुकुले चकर्ष सा
बलादपाङ्गप्रसृते विलोचने ॥ ३९ ॥
यशोभटे रूपमवन्तिशासितुः
कृतस्मिते चित्रगतं प्रशंसति ।
करस्थितं सा झटिति न्यधात्ततश्
शिलातले तामरसं त्रपावती ॥ ४० ॥
निकाममुक्तं सुकुमारमङ्गना
विलासिनस्तस्य जहार सा मनः ।
स्मरैकदूतीसहकारशाखिनो
लसन्मधावन्यभृतेव पल्लवम् ॥ ४१ ॥
तदीयमुद्दामरसोर्मिनिर्भरं
स राजहंसोऽपि विवेश मानसम् ।
कृतप्रवेशश्च सलीलमच्छिनन्
मनाङ् मृणालीमिव धीरतामतः ॥ ४२ ॥

---

१. After सा, 7 letters are mutilated in Tr. and then it gives सा. So the reading is difficult to form. २. T. reads विहस्य, but gives in the margin प्रसह्य. ३. T. reads ऽपि° for च° and Tr. in the margin जहार for चकर्ष. The original reading of Tr. is difficult to find out. ४. T. reads °कृतं for गतं. ५. I. reads झगिति and T. क्षगिति for झटिति. ६. T. mutilates one letter after तामर and K. reads त्रपाकुला for त्रपावती. ७. T. reads मधौ लसत्यन्यभृतेव and Tr. लसन्मधा - - भृतेव, but the corrector substitutes two letters धाक्ष in the blank space. ८. T. substitutes °स्ससलीलमज्जनं for °श्च सलीलमच्छिनत्. ९. Tr. reads घनाङ् for मनाङ्. १०. I. omits मि and substitutes मनः for मतः.

क्षणादपाङ्गस्तिमितायताक्षयोस्
सकम्पयोः कण्टकिताङ्गलेखयोः[1] ।
अत्रापदन्योऽन्यनिबद्धभावयोस्[2]
तयोः प्ररोहं[3] हृदि बालमन्मथः ॥ ४३ ॥

नायकस्य नायिकाप्रत्युक्तिः ।

असूययेवाथ विमुञ्चती दृशं
सखीषु सा[4] सूत्रितनर्मसूक्तिषु ।
इति स्मितक्षालितदन्तवाससा
नृपेण नागेन्द्र[5]सुताभ्यधीयत ॥ ४४ ॥

वदानवद्याङ्गि[6] सखीजनादृतः
किमेष नाम व्यतिरिच्यते जनः ।
विहाय विस्रम्भविशेषमेतया
यदङ्गमन्तर्विशतीव[7] लज्जया ॥ ४५ ॥

सदा सदाचारपरेति वार्तया
वयं हृताः[8] पन्नगराजपुत्रि ते ।
अतः किमेवं प्रतिपत्तिमूढतां
विगाहसे[9] ऽस्मासु विमुच्यतामियम् ॥ ४६ ॥

---

१. K. reads °चिह्नयो :for °लेखयोः. २. Tr. mutilates the following lines :—

अत्रापदन्योऽन्यनिबद्धभावयोस् ।
तयोः - - - - - - ॥.

३. K. reads प्रकर्षं for प्ररोहं. ४. Tr. reads साधूद्धित° for सा सूत्रित°. ५. K. reads भोगीन्द्र° for नागेन्द्र° and °पद्यत for °धीयत. ६. K. reads तदा° for वदा°. ७. I. reads °मङ्गं विशसीव and T. °मन्तर्विशसीव for °मन्तर्विशतीव. ८. K. reads हताः for हृताः. ९. Tr. reads विगाहते for विगाहसे and T. वासु for ऽस्मासु.

अनेन ते सुन्दरि दर्शनेन वा
कृतोपचारोऽस्मि कियत् कदर्थ्यसे ।
न वी[2]क्षते वल्गु न मञ्जु भाषते
गता क्वचिल्लोचनवर्त्ममालती ॥ ४७ ॥

अधःकृतास्सत्यमधीरलोचने
रसातलेन त्रिदिवस्य भूमयः ।
अनङ्गदुर्वारशराधिदैवतं
भवद्वि[3]धं रत्नमवाप्यते ऽत्र यत् ॥ ४८ ॥

कुतूहलाध्यासितमध्यलोकया
त्वया मुहू[4]र्तं फणिलोककौमुदि ।
अवैमि पातालमवाप्तसन्धिना
विलङ्घ्यते सन्तमसेन सम्प्रा[5]ति ॥ ४९ ॥

इदं मृणालादपि कोम[6]लं वपुस्
तवैष दूरादरविन्दिनीपतिः ।
पुनः पुनः संस्पृशतीव कौतुकात्
तमालगुल्मान्तरपातिभिः करैः ॥ ५० ॥

अनेन ते सश्र[7]मवारिबिन्दुना
नवीनपीयूषतु[8]षारदन्तुरः ।

---

१. K. reads ऽसि and कदर्थ्यते for ऽस्मि and कदर्थ्यसे respectively.
२. T. reads वीक्ष्यते for वीक्षते ; while K. reads this half as follows :—

न वीक्षसे वल्गु न मञ्जु भाषसे
गता क ते लोचनवर्त्मवल्लरी ॥.

३. K. reads सुदुर्लभं for भवद्विधं. ४. L. reads विमुक्तं and T. विमुक्तं both for मुहूर्तं. ५. T. reads कौमुदी for सम्प्रति. ६. Tr. reads पेलवं for कोमलं. ७. T. reads सम्भ्रम° for सश्रम°. ८. K. reads °कणेन for °तुषार°.

शिरीषमृद्वङ्गि तुषारपाण्डुना
कपोलबिम्बेन विडम्ब्यते शशी ॥ ५१ ॥

इदं त्वदाशिक्षत[1] कैतवं कुतस्
तवैष मुग्धे सरलाङ्गुलिः करः ।
इहैतदालिख्य शिलातले शनैर्
अनेन लीलाकमलं यदुज्झितम्[2] ॥ ५२ ॥

न चित्रमेवं क्वचिदस्ति भूतले
ममात्र तेनास्ति[3] कुतूहलं महत् ।
अतः[4] किमेतत् पिहितं प्रकाश्यताम्
अहेतुकस्तन्वि क एष[5] मत्सरः ॥ ५३ ॥

अदृश्यमेतद्यदि मन्यसे ततः
किमर्थ्यसे किं त्वियदेव[6] शंस नः ।
कृती त्वयायं भुजगाम्बरौकसाम्
अलेखि चित्रे कतमः कृशोदरि ॥ ५४ ॥

लतेव सम्मीलितषट्पदस्वना
कियच्चिरं निर्वचनैवं[7] तिष्ठसि ।
इतश्चकोराक्षि विचिन्त्य सूनृतं
ममोत्तरं किञ्चन[8] दातुमर्हसि ॥ ५५ ॥

---

१. T. reads अशिक्षितशैतवं for अशिक्षत कैतवं; while Tr. substitutes वता° for वदा°. २. T. reads °र्पितम् for °दुज्झितम्. ३. I. reads अति° and T. अस्तु. both for अस्ति. ४. K. reads त्वया for अतः. ५. K. reads अहेतुको नन्वयमेव for अहेतुकस्तन्वि क एष. ६. K. reads नन्विदमेव for किन्त्वियदेव. ७. I. reads निर्वचना° and T. निर्वचसा° for निर्वचनै°. ८. Tr. reads किञ्चिद्दु for किञ्चन.

[1]यथातिजिह्रेषि यथातिवेपसे
यथा कपोले पुलकं बिभर्षि च ।
तथाऽत्र मन्ये तव पक्षपातवन्
नितान्तमन्तःकरणं कृशोदरि ॥ ५६ ॥

ह्रिये तवेयं यदि [2]कल्पते कथा
किमेतया नः प्रकृते [3]यतामहे ।
यदर्थमेते वयमागताः स्वयं
स ना[4]र्प्यते किं करभोरु सायकः ॥ ५७ ॥

सलीलमेवं वदति स्मितानने
नृपे नवप्रेमरसार्द्रचेतसि ।
विवर्तयन्ती मणिकङ्कणं करे
मुमोच मौनं न फणीन्द्रकन्यका ॥ ५८ ॥

माल्यवतीवचनम् ।

तया तथा दृ[5]ष्टमथान्तरान्तरा
कटाक्षकान्तिः स्नपितावतंसया ।
इति स्मि[6]ताप्यायितदन्तदीधितिर्
जगाद तं माल्य[7]वती विशाम्पतिम् ॥ ५९ ॥

---

१. K. reads this stanza as follows :—

कियद्विजिह्रेषि कियच्च वेपसे
कियत् कपोले पुलकं बिभर्षि च ।
न तेन मन्ये तव पक्षपातवत्
नितान्तमन्तःकरणं ममोपरि ॥ ५५ ॥.

२. T. reads कल्प्यते for कल्पते. ३. T. reads स्वतामहे for यतामहे. ४. Tr. reads नाप्यते for नार्प्यते. ५. Tr. mutilates two letters after दृष्ट°. ६. Tr. has स्मित.—.यतदन्त°. ७. Tr. reads मध्यवती for माल्यवती; while T. substitutes तत् for तं.

तवैतया सत्कृतिपात्र सत्कृतं
त्वयं न यत् कल्पितमल्पमध्यया।
न सोऽवलेपो न च सा प्रमादिता
न चेत्रपा तत्र नृपोऽपराध्यति॥ ६०॥

कृतीति वार्ता तव वेत्सि वाञ्छितं
त्वमन्तरात्मेव न कस्य वा भुवि।
अतस्सखीभावगतस्य गोपनं
न युज्यते नस्त्वयि तन्निशम्यताम्॥ ६१॥

शिलीमुखेऽस्मिन् तव नामलाञ्छिते
मृगोपनीते मृगशावलोचना।
प्रमोदमाप्तेयमितो विलोकिते
करे चकोरीव तुषारदीधितेः॥ ६२॥

क एष राजेति मुहुः कुतूहलाद्
इयं यदा पृष्टवती सखीजनम्।
अतस्तदास्यै कथितस्सविस्तरं
मया त्वमुर्वीतलमीनलाञ्छनः॥ ६३॥

करेण सासूयमपास्य कर्णतः
क्वणद्द्विरेफावलि नीलमुत्पलम्।
तदैतयाभ्युद्गतपक्षपातया
श्रुता गुणाढ्यस्य बृहत्कथा तव॥ ६४॥

---

१. T. reads this half as follows:—
ततो तया सत्कृतिपात्रमत्कृतं
स्वयं न सत्कल्पितमत्यमध्यया।.

२. T. and I. read परं for न च and नृपाप° for नृपोप°. ३. K. reads शंसनं न युज्यते किञ्चिदथापि वर्ण्यते; while Tr. has युज्यते न · · · · यं निशम्यताम्. ४. K. and T. read °केतनः for °लाञ्छनः. ५. T. and I. read मदेतयाभ्युद्गत° and Tr. तदेतयाभ्युद्गत° both for तदैतयाभ्युद्गत°.

इमां त्वदाकारनिरूपणे सखीम्
अवेत्य पर्युत्सुकलोचनामिव ।
ततो मया विश्वविलोचनोत्सवस्
त्वमेव चित्रे लिखितोऽसि पार्थिव ॥ ६५ ॥[1]

उदञ्चितव्यायतपक्ष्मणा ततस्[2]
सखीसमक्षं निभृतेन चक्षुषा ।
चिरं निपीतस्सतृषेव मुग्धया[3]
त्वयेतया मध्यमलोकवासवः ॥ ६६ ॥

अतो वरोऽयं युवयोस्समागमः[4]
कुमुद्वती-चन्द्रमसोरिवोचितः ।
इयं हि बालोच्छ्वसितं मनोभुवस्[5]
त्वमत्र लोकत्रितयैकसुन्दरः ॥ ६७ ॥

नृप गृहीतुं नयमत्र कोऽप्यलं[6]
सुरेषु वा पन्नगपुङ्गवेषु वा ।
स एष पङ्केरुहकर्णिकामृदुस्[7]
त्वया शयोऽस्याः क्रियते सकौतुकः ॥ ६८ ॥

अयाचितोऽप्यर्पित एव ते शरः[8]
क्षितेरयं न्यायविदां वरैतया ।[9]
तदेनमभ्यर्थयसे कथं पुनः
कलत्रमेषा हि वसुन्धरा तव ॥ ६९ ॥[10]

---

१. T. I. and Tr. read ऽत्र for ऽसि; while T. reads पार्थिवः for पार्थिव.
२. Tr. has this line thus:—

इव ' ' व्यायतपक्षयान्ततः ।.

३. Tr. has °पीतः सुवृशैव for °पीतस्सतृषेव. ४. T. reads सतो for अतो; while Tr. and I. वने for वरो. ५. Tr. reads बाला श्वासितं for बालोच्छ्वसितं. ६. T. reads नृपात् for नृप. ७. T. reads मृदुः for °मृदुः. ८. K. reads एष ते करः for एव ते शरः. ९. T. reads °वरे for °वरै°. १०. K. and T. read ऽपि for हि.

इतीति वृत्तं तदुपाश्रयं तथा
प्रकाशयन्ती पृथिवीपतिम्प्रति।
छलाद[1]लीकभ्रुकुटिं विधाय सा
तयाऽऽलुलोके फणिराजक[2]न्यया ॥ ७० ॥

अथ द्विरेफस्य मुखाब्जपातिनो
निवारणायोरगराजकन्यका।
शिलातलात् सम्भ्रममीलितस्मृतिस्
तदाशु[3] लीलाशतपत्रमाददे ॥ ७१ ॥

ततस्स रोमाञ्चनिपीडिताङ्गदो
रमाङ्गदं व्यक्तशशिप्रभेङ्गितः।
अपश्यदिन्दीवरदामदीर्घया
प्रमोद[4]विस्तारितया दृशा नृपः ॥ ७२ ॥

रमाङ्गदवचनम्।

समर्पिता पार्थिव पुष्पकेतुना
तवेयमार्द्रप्रणया मनस्विनी।
असीमसौन्दर्यसुधाविलासभूर्
उदन्वतेवेन्दुकला पिनाकिनः ॥ ७३ ॥

किमन्यदत्रोल्लसितं जगत्त्रये
तवैव[5] सौभाग्यपताकया नृप।
यदागता मन्मथपत्त्रिणामियं
शरव्यतामेवमपि[6] श्रुते त्वयि ॥ ७४ ॥

---

१. I. reads व (ब) लात् for छलात्. २. T. reads °कन्यका for °कन्यया. ३. K. reads तयाऽऽशु for तदाशु. ४. K. reads प्रसार° for प्रमोद°. ५. T. reads तवेव for तवैव. ६. Tr. has :—
यदागता मन्मथ - - - मयं
शरव्यतामेपि मपि श्रुते नयि।.

वधूर्दिलीपस्य सुदक्षिणा यथा
यथा सुनन्दा भरतस्य भूपतेः ।
रघूद्वहस्यावनिकन्यका यथा
तथा तवेयं विधिनोपपादिता ॥ ७५ ॥

किमन्यदस्याः कृतपाणिपीडनः
पदं निधत्से गृहमेधिनां धुरि ।
इति प्रसर्पत्स्मितचन्द्रिकश्शनैर्
अभाषतोर्वीतिलकं रमाङ्गदः ॥ ७६ ॥
कुलकम् ।

विलोकितं चित्रमलीकभाषिणी
भवत्सखीयं प्रतिभासते मम ।
उदीरितैवं किल पार्थिवेन सा
भृशं ललज्जे निभृतं जहास च ॥ ७७ ॥

विलोकयन्ती तमपाङ्गलोचना
समुल्लसत्स्वेदलवाङ्कितस्तनी ।
ततस्सुजातस्तबकास्तमौक्तिका
लतेव सा हेममयी व्यकम्पत ॥ ७८ ॥

मुखे तवासक्तमिदं शशिप्रभे
दृशावतंसागतयैतदीयया ।
सखीजनस्सस्मितमित्युवाच ताम्
अवन्तिनाथं च मिथो रमाङ्गदः ॥ ७९ ॥

१. Tr. reads सनाभा and K. सुनाभा both for सुनन्दा. २. K. reads °सादिता for °पादिता. ३. T. reads °पीडनं for °पीडनः. ४. Except I. all others do not insert कुलकम्. ५. T. reads विलोकितः and अलीकभाषिणि for विलोकितं and अलीकभाषिणी respectively. ६. Tr. mutilates two letters after उदीरितैवं, but there appears in correction मृदु for the same; while I. reads उदीरितेषं for उदीरितैवं. ७. K. reads अहर्ष for जहास. ८. Tr. mutilates this line:—

दृशावतंसागतयैतदीयया।.

९. Tr. mutilates three letters before रमाङ्गदः.

अत्रान्तरे झटिति चित्तमिवाच्छमम्भः
क्षोभं जगाम सरितस्तुहिनांशुसूतेः ।
वाति स्म च प्रसभभग्नतमाल-ताल-
हिन्ताल-साल-सरलः सहसा समीरः ॥ ८० ॥

पयोदोदयः ।

उदनमदथ तत्क्षणादुदञ्चत्-
कनकपिशङ्गतडिल्लतः पयोदः ।
अधरितमुरजध्वनीनि मुञ्चन्
विधुरितकर्णतलानि गर्जितानि ॥ ८१ ॥

अथ समुदितत्रासा मेघस्वनान्ननु भूपतेर्
भुजपरिघयोरन्तर्बालाप्रवेष्टुमियेष सा ।
किमसि चकिता मा त्वं भैषीरितो भव लज्जया
कृतमिति च तामूचे देवस्स साहसलाञ्छनः ॥८२॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभासँल्लापो नाम सप्तमः सर्गः समाप्तः ॥ ७ ॥

---

१. I. reads झगिति and T. स्तगिति both for झटिति. २. T. reads °सूक्ते: for °सूतेः; while I. omits शु through mistake. ३. K. reads प्रहिनहभग्न°, I. प्रसभभश्चि and gives the letter ग्न for श्चि in the margin, for प्रसभभग्न°. ४. I. omits हिन्तालसाल°, but gives in the marginal correction. ५. Tr. mutilates two letters after उद and omits तत्°. ६. I. and T. read °कण्ठ° for °कर्ण°. ७. Tr. has thus :—

अथ - - - - - - सा - - - - नवभूपते.

८. I. has °न न for °ननु; while T. reads °त्रासमेघस्वनान्न न for °त्रासा मेघस्वनान्ननु. ९. Tr. has this half as follows :—

किमपि चकितामास्त्वं वै - - - - रलज्जया
कृतमिति च तामूचे - - - - - - - - - - ॥ ८२ ॥

१०. I. reads for the complete quolophone as follows—नवसाहसाङ्कचरिते परिमलस्य कृतौ फणिराजसुतासम्भाषणः सप्तमः सर्गः, Tr. reads इति परिमलकृतौ नवसाहसाङ्कचरिते फणिराजसुतासंभाषणो नाम सप्तमः सर्गः and T. परिमलकालिदासस्य कृतौ महाकाव्ये साहसाङ्कचरिते षष्ठः सर्गः ।.

# अथाष्टमः सर्गः ।

## नायिकातिरोधानम् ।

सा[1] ऽपदे ऽथ भुजगेन्द्रकन्यका
[2]खे पयोदपटलैस्तिरोहिते ।
नर्मदापुलिनपल्लवास्थिता
हंसपङ्क्तिरिव क[3]म्पमाददे ॥ १ ॥

स्पर्धयेव निचयः पयोमुचां
तारमन्द्रमनदत् यथायथा ।
सा नरेन्द्रतिलकं तमैक्षत
मुग्धलोलनयना तथातथा[4] ॥ २ ॥

उल्लसन्नवपयोधरालसां[6]
द्यां[7] च तां च सुमुखीं विलोकयन् ।
भूपतिस्स नितरामभूद्वशे[8]
विस्मयस्य च मनोभवस्य च ॥ ३ ॥

[9]वामनत्वमलिनत्वमत्यजन्
व्यञ्जितक्रम[10] इव त्रिविक्रमः ।

---

१. Tr. mutilates three letters after सा. २. T. reads स्वे for खे and Tr. omitting one letter at the beginning of this line and then it has °स्तिरे° omitting हिते for °रोहिते. ३. T. reads पङ्क्ति°. I. also reads the same, but corrects कम्प°. ४. K. reads °माधधे for °माददे. ५. K. reads पदे पदे; while Tr. mutilates 7 letters at the beginning of this line and I. reads चारु° for मुग्ध°. ६. T. reads °लसा for °लसां. ७. T. reads क्यां च तां च सुमुखी for द्यां च तां च सुमुखीं. ८. Tr. reads वशो for वशे. ९. I. reads वामनत्वमलिनमेवमत्यजन्, Tr. वामनत्वम -मेव स त्यजन् and T. वामनत्वमलिनमेव न त्यजन् all for वामनत्वमलिनत्वमत्यजन्. १०. T. has व्यञ्जित - - - पविविक्रमः and K. व्यञ्जितविग्रहपविविक्रमः.

क्रामति स्म सहसैव मेघभूर्
अन्धकारनिकरोऽथ रोदसी ॥ ४ ॥

नेत्ररोधिनि तयोर्न केवलं
मूर्च्छिते तमसि वैशसं हृदि ।
यावदास्यविगलद्बिसाङ्कुरे
चक्रवाकमिथुने ऽप्यजृम्भत ॥ ५ ॥

कर्णभूषणमणिप्रभालवैस्
तोकलक्षितकपोलपत्त्रया ।
कृष्यमाणनयनोऽथ पिप्रिये[4]
पन्नगेन्द्रसुतया तया नृपः ॥ ६ ॥

तेजसि स्फुरति ताडिते मुहुर्
बिभ्यती कनकभङ्गपिङ्गले[6] ।
तं हृदिस्थितमिवेशमीक्षितुं
साऽपि मीलितविलोचनाऽभवत् ॥ ७ ॥

आकाशवाणी ।

एष ते न घटते मनोरथः
पार्थिवाऽहिपतिकन्यकाम्प्रति ।
गच्छ विन्ध्यविपिनान्तदृष्टया
वञ्चितोऽसि मृगतृष्णयैतया ॥ ८ ॥

१. T. reads °न्धकार° for °रन्धकार°. २. Tr. has नेत्रयो - - - - न केवलं. ३. T. has यामवास्यविगलद्बिमा and K. यामवाप्य विगलद्बिमाय [illegible] for [illegible]सांकुरे. ४. T. reads विप्रिये for पिप्रिये. ५. T. and Tr. read [illegible] and I. तडिते for ताडिते. ६. T. reads °पिङ्ग° and Tr. °पङ्क° both for °[illegible]°. ७. Tr. has मिवे-वीक्षितुं and gives in correction °[illegible]° for °[illegible]°. ८. Tr. reads निमीलित° for ऽपि मीलित°. ९. Tr. mutilates this line.

साहसोदधिविलोडने[1] स्वयं
योंऽसमंसलतयार्पयिष्यति[2] ।
श्रीरिवोरसि मुरद्विषः पदम्
तस्य निश्चितमियं[3] विधास्यति ॥ ९ ॥

पश्य पश्य चपलेयमन्तिकात्[4]
नीयते तव यथोचितं कुरु ।
एवमेव यदियं न लभ्यते
जानकीव[5] जनकप्रतिज्ञया ॥ १० ॥

कन्यकासि किमिदं शशिप्रभे
युक्तमेहि पितुरन्तिकं व्रज[6] ।
इत्यविग्रहवती नभस्तलात्[7]
उल्ललास सहसा सरस्वती ॥ ११ ॥

तां निशम्य स निकामविस्मितः
साचिका[9]र्मुकलतामलोकत[10] ।
इन्दुमौलिगलकन्दलासितं[11]
तत्क्षणाच्च तिमिरं[12] न्यवर्तत ॥ १२ ॥

---

१. Tr. reads °विलोकने for °विलोडने. २. Tr. mutilates 8 letters at the end of this line and T. and I. read यो समं for योंऽसमं°. ३. T. reads °मिदं for °मियं; while K. निधास्यति for विधास्यति. ४. Tr. reads °मुद्रिता दीयते for °मन्तिकान्नीयते; while T. reads °य यन्तिका for °यमन्तिकात्. ५. Tr. mutilates 9 letters at the beginning of this line. ६. T. and I. read भज for व्रज. ७. T. reads °स्थलात् for °स्तलात्. ८. Tr. mutilates this line. ९. Tr. reads साचि for साचि.° १०. K. reads अलोकत for अलोकत. ११. K. and Tr. read °कन्दलावित for °कन्दलासित. १२. Tr. reads किमिति for तिमिरं, but the corrector has put तिमिरं instead of किमिति and T. निवर्तत for न्यवर्तत. I also reads the same, but correct in the margin.

साऽचिरांशुतपनीयमेखला
शक्रचापमणिकुण्डला ततः ।
क्वापि मुद्रितमयूरताण्डवा
संहतिर्जलमुचां तिरोदधे ॥ १३ ॥

सा पुरातनपथेन पावनी
सोमसूतिरपि निम्नगा वहत् ।
स्वादुनिर्मलरसोर्मिनिर्भरा
भारतीव मसृणं महाकवेः ॥ १४ ॥

अप्यपाकृतरयः स नर्मदा-
वीचिलास्यरचनाकुतूहली ।
आववौ शबरराजयोषितां
नर्तितालकलतस्समीरणः ॥ १५ ॥

इत्यकालजलदादिवैकृते
केन चिद्विरचिते गते शमम् ।
भूपतेः शशिमुखी सखीयुता
नेत्रनिर्विषयतामवाप सा ॥ १६ ॥

क्वापि नूनमपहृत्य तन्मनो
नागराजदुहितो जगाम सा ।

१. Tr. mutilates 9 letters after शक्र २. Tr. reads °पदेन for °पथेन. ३. K. reads निर्मला for निम्नगा. ४. Tr. has स्वा - - - - - - - - निर्भरा; while K. and T. have स्वादुनिर्मलरसोर्मिभारती निर्भरेव. and I. has स्वादुनिर्मलरसोर्मिभारती निर्भरा च, but corrects स्वादुनिर्मलरसोर्मिनिर्भरा भारतीव. ५. Tr. reads मसृणा for मसृणं. ६. T. reads °वीच्विरस्य रशना° for °वीचिलास्यरचना°. ७. K. reads आववौ for आववौ. ८. Tr. mutilates two letters at the beginning of this line. ९. Tr. reads समम् for शमम्. I. also the same, but corrects शमम्. १०. Tr. has - - - शशिमुखी - - - तां for this whole line. ११. Tr. reads °तनया for °दुहिता and mutilates 4 letters after this word.

उत्पलस्य सरसं लसत्स्पृहा
चक्रवाकवनितेव केसरम्[१] ॥ १७ ॥

अग्रतः[२] कृतपयोधरश्रिया
धौत[३]तप्ततपनीयकान्तया ।
विद्युतेव[४] सदृशा तयाऽऽकुलस्
सोऽभवज्झटिति[५] दृष्टनष्टया ॥ १८ ॥

सा पुरो मम हृतेति लज्जया
चिन्तया किमिव सा चरेदिति ।
सा पुनर्न सुलभे[६]त्यसौ शुचा
तप्यतेस्म तिसृभिः क्षितीश्वरः ॥ १९ ॥

तस्य तापजनने[७]न मानसं
तेन बालविरहेण विव्यथे[८] ।
केतक[९]च्छदकदर्थने परं
यत् कणोऽपि शिशिरः प्रगल्भते ॥ २० ॥

जित्वरं जगति पुष्पकेतुना
तद्विकृष्य तरसा शरासनम्[१०] ।

---

१. Tr. reads केवलम् for केसरम्. २. Tr. mutilates first three letters, but there appears visarga in it. ३. K. and Tr. read धातु° for धौत°. ४. T. reads विद्युदेव सदृशा for विद्युतेव सदृशा; while Tr. has विद्युते सदृशयाति ---. ५. Tr. has ---- झगिति; while K. substitutes सपदि and T. त्वरिति for झटिति. ६. K. reads नहि and T. ननु for न सु°. ७. T. reads तापसजनेन and K. तापसदनेन for तापजननेन; while Tr. mutilates seven letters at the beginning of this line ८. Tr. reads विंध्यते for विव्यथे. ९. T. reads ते तु कामिदकदर्थने परं यत्क्षणोऽपि, Tr. has तेन गच्छ ददद्रने यद्यरक्रणोऽपि for केतकच्छदकदर्थने परं यत् कणोऽपि; while I. and T. substitute शिखिनः for शिशिरः. १०. I. does not insert तद्विकृष्य, but it appears in the marginal correction; while Tr. mutilates four letters after तरसा.

ताडयते स्म हृदये पतत्रिणा
सोऽथ मालवकुरङ्गलांच्छनः ॥ २१ ॥
लज्जया वलितकण्ठकन्दलं
लोचनाञ्चलमिलद्वतंसकम् ।
तस्य वर्तितमिवाभवत्तदा
तत् प्रियावदनमुन्नसं हृदि ॥ २२ ॥
म्लानिमाप स तया विना नृपस्
तत्र पन्नगपतेस्तनूजया ।
स्वां रुचिं नहि कदाचिदश्नुते
शर्वरीविरहधूसरश्शशी ॥ २३ ॥
पाण्डुपक्ष्मलदृशः परिच्युतं
सोऽथ माल्यशकलं व्यलोकत ।
तादृशि व्यतिकरे विनिर्गतं
हासलेशमिव पुष्पधन्वनः ॥ २४ ॥

---

१. I. omits the following portion originally :—

- - - - - दये पतत्रिणा
सोऽथ मालवकुरङ्गलाञ्छनः ॥ २१ ॥
लज्जया वलितकण्ठकन्दलं
लोचनाञ्चलमिलद्वतंसकम् ।
तस्य वर्तितमिवाभवत्तदा
तत् प्रियावदनमुन्नसं हृदि ॥ २२ ॥,

but it appears in the margingal correction; while Tr. mutilates first four letters in this line. २. Tr. has the following two lines as follows:—

तस्य - - त्तमिवाभ - - -
- - - - - - - मुन्नसं हृदि ॥ २२ ॥.

३. Tr. reads मौन°, K. ग्लानि° both for म्लानि.° ४. K. reads ईहते for अश्नुते. ५. Tr. mutilates three letters at the beginning of this line and reads °श्रुदृशः, for° क्ष्मलदृशः and corrector substitutes केशतोऽथ सुदृशः; while T. reads परिच्युतः for परिच्युतं. ६. K. reads ऽपि for ऽथ. ७. T. reads विनिर्गता for विनिर्गतं.

शंसदुज्ज्वलकपोलसंङ्गतं
कुङ्कुमेन दलकोटिचुम्बिना।
सम्भ्रमेण गलितं नेतभ्रुवः
कर्णतामरसमाददेऽर्थं सः॥ २५॥

कार्मुके सति शरेषु सत्स्वपि
प्रेयसी तव हृतान्तिकादिति।
तेन सौरभहृतालिनिःस्वनैर्
वाच्यतेव नृपतेर्व्यधीयत॥ २६॥

कोष्णनिःश्वसितवेपितच्छदं
तन्निवेश्य वदने स सादरः।
अर्धमीलितविलोचनोत्पलः
पुस्तकल्पित इवाभवत् क्षणम्॥ २७॥

नर्मदोर्मिलुलिते तदंशुके
पल्लवाल्लिखितहंसहारिणि।
आहृतस्तनविलेपने दृशा
सोऽकृत प्रणयमिन्दुपाण्डुनि॥ २८॥

मा विषीद नवसाहसाङ्क, ते
कान्तया गतमनेन वर्त्मना।

---

१. Tr. mutilates two letters at the end of this line and six letters at the beginning of the next line. २. T. reads °भाञ्जिना for °चुम्बिना. ३. T. reads मनोभुवः and corrects नतभ्रुवः. ४. I. reads च and T. °थ for ऽर्थ ५. T. reads °भृतालि° for °हृतालि°; while Tr. mutilates one letter at the beginning of this line. ६. T. reads कोप° for कोष्ण°. ७. I. omits स सादरः ८. Tr. mutilates six letters in this line at the beginning. ९. K. and Tr. read °भारिणि for °हारिणि. १०. Tr. reads दृशो: for दृशा. ११. Tr. has this line as follows:—

-------- --साङ्किते.

१२. T. and Tr. read शान्तया for कान्तया.

पश्य तत्पदमितीव रेवया
तस्य सारसरुतैरसूच्यत ॥ २९ ॥

किं निमग्नमिह बालया तया
भीतया भुजगराजकन्यया ।
नैवमत्र नियतं रसातले
विद्यते विवरमित्यतर्कयत् ॥ ३० ॥

सोऽतिमात्रगहनेऽपि रंहसा
पार्थिवः पतितुमैच्छदम्भसि ।
जीवितं तृणमिवावजानते
साहसव्यसनिनोऽपि तादृशाः ॥ ३१ ॥

तत् समीहितमवन्तिवासवस्
तस्य नावददुपान्तवर्तिनः ।
एष विघ्नमिह साहसोत्सवे
कल्पयिष्यति ममेति शङ्कितः ॥ ३२ ॥

उज्झति स्म स शनैः समुच्छ्वसन्
पल्लवासनमुपास्यशासनः ।
अग्रहीच्च सशरं करेण तत्
व्यक्तराजककुदेन कार्मुकम् ॥ ३३ ॥

---

१. Tr. reads तद्धृतमितीव रेखया for तत्पदमितीव रेवया; while I. substitutes °पट° for °पद°. २. Tr. reads किं न मम° for किं निमग्न.° ३. K. reads °जन्यया for °कन्यया. ४. Tr. mutilates six letters after नैव. ५. Tr. mutilates three letters after विद्यते. ६. Tr. reads साहसा° and mutilates five letters after this word. ७. T. reads तावदुपयान्त° for नावददुपान्त°. ८. Tr. reads साहसोद्भवे for साहसोत्सवे. ९. K. reads लज्जितः for शङ्कितः. १०. Tr. reads घने for शनैः and mutilates four letters after it in this line and first two letters in the next line.

पन्नगेन्द्रदुहितुः करेण यः
सख्यमापदरविन्दबन्धुना ।
[१]अर्पितं प्रणयिना तमप्यसौ
सायकं कनकपुङ्खमाददे ॥ ३४ ॥

सुभ्रुवः स्मरविलासं[२]देशिकं
तं शशंस स [३]शरं पतत्रिषु ।
पीतशीतकरमूर्तितानवं
भानुमानिव मयूखमंशुर्षु[४] ॥ ३५ ॥

[५]व्यक्तवरणलक्ष्मणा ततस्
स्रस्तकेशकुसुमाकु[६]लालिना ।
मेघसिक्तसिक[७]तेन वर्त्मना
नर्मदाजलसमीपमाप सः ॥ ३६ ॥

एष जा[८]तु न विकत्थते क्वचित्
[९]लक्ष्यतेऽस्य फलतः सदा क्रिया ।
तत् करिष्यति किमत्र साहसं
चेतसीति विदधे रमा[१०]ङ्गदः ॥ ३७ ॥

---

१. After अ Tr. mutilates eight letters in this line. २. T. reads °वैशिकं and I. °देशकं both for °देशिकं. ३. Tr. reads पतगं for स शरं. ४. Tr. mutilates two letters at the end of this line. ५. Tr. reads उक्तसवरण° for व्यक्तवरण°. ६. K. reads °करालिना and T. °कलालिना for °कुलालिना. ७. I. reads °कुसुमेन for °सिकतेन. ८. T. reads जातकुलाविकथ्यते, K. reads जातुरविकत्थनः and gives in the margin जातु न विकत्थनः for जातु न विकत्थते. ९. Tr. mutilates seven letters after लक्ष्यते; while T. reads फलकः सदाश्रिया for फलतः सदा क्रिया. १०. K. reads रथाङ्गदः for रमाङ्गदः.

नर्मदाप्रवेशः।

अक्षिपत्तटशिलाविटङ्कतः[1]
पार्थिवः स्वमथ नर्मदाम्भसि।
वारिधेः पयसि विश्वदीपकः
[2]सायमद्रिशिखरादिवार्यमा ॥ ३८ ॥

तत्र मीनमकराकुले[3] पतन्
आससाद स विलासमीश्वरः[4]।
[5]यामुनाम्भसि निपातिनः पुरा
गोपतामुपगतस्य शार्ङ्गिणः ॥ ३९ ॥

[6]अम्भसस्तदवपात[7]ताडितात्
ऊर्ध्वमेत्य निपतत्सु बिन्दुषु।
साहसेन परितोषितैस्सुरैर्
मौक्तिकार्घे[8] इव तस्य चिक्षिपे ॥ ४० ॥

किञ्चिदन्तरितमूर्तिभिः[9] क्षणाद्
[10]अन्वगच्छदथ तं रमाङ्गदः।
येन यात्यरुणसारथिः पथा
वासरै[11]स्तमवलम्बते न किम् ॥ ४१ ॥

---

१. Tr. mutilates last two letters in this line. २. Tr. reads बिम्ब° for साय° and T. °मभि° for °मद्रि°. ३. Tr. reads °लये for °कुले. ४. T. reads ईश्वरम् for ईश्वरः. ५. T. reads यामुनाम्बुभि° for यामुनाम्भसि and I. यामुनाम्बु-भि° for the same. ६. T. mutilates first ten letters in this line. ७. K. and T. read °दवगाह° for °दवपात°. ८. T. reads मौक्तिकाद्य for मौक्तिकार्घे. ९. T. reads °मूर्तिभिः and Tr. °मूर्तिभक्षणात् for °मूर्तिभिः and °मूर्तिभिः क्षणात्. १०. Tr. mutilates first seven letters in this line. ११. T. reads तदवलम्बते for तमवलम्बते; while K. reads तमवगच्छते for the same.

कस्तुलाग्रमधिरोप्य जीवितं
स्वामिनं त्वमिव सेवतामिति ।
तस्य हंसनिनदेन वल्गुना
साधुवादमिव नर्मदा ददौ ॥ ४२ ॥

बिलप्रवेशः ।

तौ मुहुर्जलचरैरदृश्यताम्
अग्रतश्चकितमुक्तवर्त्मभिः ।
ध्वान्तसन्ततिभिदे रसातलम्
प्रस्थितौ रवि-निशाकराविव ॥ ४३ ॥

आश्रयत्यवनिमेघवाहने
वारिगर्भमभितो गरीयसि ।
प्राप मेकलसुता समानताम्
अन्तराहितनिधानया भुवा ॥ ४४ ॥

उज्झिता झटिति कार्यगौरवात्
ईश्वरेण रुरुचे न मेदिनी ।
सोऽयमेन पुनरप्यवैष्यता
भानुनेव पदवी पयोमुचाम् ॥ ४५ ॥

---

१. Tr. reads तस्तुला° for कस्तुला°. २. T. reads चामिव सेवतां and Tr. तामिव सेव्यतां both for स्वमिव सेवताम्. ३. Tr. mutilates six letters after तस्य. ४. Tr. reads दधौ for ददौ. ५. Tr. reads °भिदौ for °भिदे. ६. T. reads प्रस्थितो for प्रस्थितौ. ७. T. and Tr. reads मेखल° for मेकल°. ८. Tr. reads °निवृत्तया for °निधानया. ९. I. reads झगिति and T. जगिति for झटिति. १०. From उज्झिता झटिति कार्य° to the end of this stanza and then 36 stanzas of this Canto and the complete ninth and tenth cantoes are lost in the manuscript Tr.

आपपात सरमाङ्गदः क्षणात्
सर्वतस्स तमसाविले बिले ।
गूढमत्सरविषे विशोषवान्
दुर्जनस्य मनसीव सद्गुणः ॥ ४६ ॥

येद्बभूव पुरतो ऽस्य भूपतेर्
एककुण्डलघटासितं तमः ।
तस्य तद्दिनकरांशुभासुरैर्
मौलिरत्नकिरणैरभज्यत ॥ ४७ ॥

सान्द्रहेमरजसा महौजसम्
अग्रगीरगरुधूपगन्धिना ।
सोऽथ तेन बिलवर्त्मना शनैः
क्रोशमात्रमगमन्नरेश्वरः ॥ ४८ ॥

सिंहदर्शनम् ।

लग्नसान्द्रगजशोणितच्छटैश्
शौर्यपावकशिखाङ्कुरैरिव ।
केसरैरतिकरालकन्धरो
मार्गमस्य रुरुधे ऽथ केसरी ॥ ४९ ॥

मुक्तघर्घररवस्स रंहसा
तं विशामधिपमभ्यधावत ।

---

१. I. reads रूढ° for गूढ° and substitutes °विशे for °विषे. २. K. and T. read विशेषता for विशेषवान्. ३. T. reads यं for यत्. ४. T. reads °स्तिमं for °सितं, but it seems quite incorrect. ५. T. reads °धूम° for °धूप°. ६. T. reads जनेश्वरः for नरेश्वरः.

व्यात्तदीर्घदशनास्यकेन्दरः
पूर्णमिन्दुमिव सिंहिकासुतः ॥ ५० ॥

अर्धचन्द्रमथ तज्जिघांसया
सन्दधे धनुषि यावदीश्वरः।
तावदस्फुटितकोरकं पुरो
बालकुन्दविटपं तमैक्षत ॥ ५१ ॥

बिभ्रतो विकटदंष्ट्रमाननम्
कालमेवशकलासिततित्विषः।
आयतोऽभिमुखमीर्ष्यया जवात्
तेन वर्त्म मुमुचे न पोत्रिणः ॥ ५२ ॥

गजदर्शनम्।

किञ्चिदस्य पुरतोऽथ गच्छतः
कर्णतालविधुतालिपङ्क्तिना।
रुद्ध्यते स्म समदेन पद्धतिर्
दीर्घदन्तमुसलेन दन्तिना ॥ ५३ ॥

मन्द्रकण्ठनिनदोऽतिवेगवान्
ऊर्ध्ववालधिरुदग्रलोचनः।
कुण्डलीकृतकरस्तमभ्यगात्
स क्रुधा निभृतकर्णपल्लवः ॥ ५४ ॥

१. T. reads °रदानास्यकन्धरः पूर्ण° for °दशनास्यकन्दरः पूर्ण°; while K. substitutes °कन्धरः for °कन्दरः. २. K. reads पत्रिणः for पोत्रिणः. ३. T. reads ऽनु for ऽथ. ४. K. reads °कुलिशेन for °मुसलेन

यावदङ्कुरितमत्सरो ऽभवत्
तस्य सम्मुखमधिज्यकार्मुकः।
तावदैक्षत न स क्वचिद्द्विपं
राजगन्धमद (वह?)गन्धकेसरी ॥ ५५ ॥

उत्पतन्निपतदग्रतो मुहुर्
मुञ्चदट्टहसितं सहार्चिषा।
केवलं कपिलकुन्तलं शिरः
पश्यतोऽस्य न चमत्कृतं मनः ॥ ५६ ॥

एवमादि यदभून्महीपतेर्
अद्भुतं पथि विभीषिकावहम्।
तद्बिभेद निजसत्त्वसम्पदा
तिग्मदीधितिरिव त्विषा तमः ॥ ५७ ॥

सरिदुत्तरणम्।

तां ददर्श सरितं सुदुस्तराम्
अग्रतोऽथ बिलकल्पवित्नृपः।
स्पर्शतः किल यदम्भसां झटि-
त्यश्मभावमुपयान्त्यसूरयः ॥ ५८ ॥

मारुतैरपरपारनुन्नया
प्रांशु वंशलतया स सानुगः।

१. T. reads गजयूथ° for °मद (वह) गन्ध.° २. T. reads आर्द्र° for अट्ट°. ३. T. reads हसार्चिषा for सहार्चिषा. ४. T. and I read विभीषिकोद्भवम् for विभीषिकावहम्. ५. I. reads °मोऽथ for °तोऽथ and substitutes °कल्प° for °कल्प°. ६. I. reads झगिति and T. झगति both for झटिति. ७. I. reads समानुगः for स सानुगः.

तामलङ्घ्यदथोपगूढया
जन्मभीतिमिव योगविद्यया ॥ ५९ ॥

नगरदर्शनम् ।

प्रस्थितस्तदनु सोध्यमं पुरम्
सोऽथ साहसवतां पुरस्सरः ।
निर्मितं मणिमयूखपल्लवैर्
बालमातपमिव व्यलोकत ॥ ६० ॥

इन्द्रनीलकपिशीर्षकं ततस्
सोऽभितः स्फटिकसालमैक्षत ।
सावशेषजलनीलकोटिभिश्
शारदैर्घटितमम्बुदैरिव ॥ ६१ ॥

उत्पताकमणितोरणाङ्कितं
मण्डितं कनकपल्लवस्रजा ।
किञ्च काञ्चनकपाटसम्पुटं
तत्र गोपुरमपश्यदीश्वरः ॥ ६२ ॥

विस्मयेन विषयीकृतः पुरं
तेन सोऽविशदवन्तिवासवः ।
निर्वृतैः पदमिवोज्झितावनिस्
सूर्यमण्डलपथेन योगवान् ॥ ६३ ॥

---

१०. I. reads अलङ्घ्य यदथो° for अलङ्घ्यदथो°; while T. substitutes °भीसम् for °भीतिम्. २. K. reads सायममतः for सोध्यमं पुरम्. ३. T. reads सोऽभितः स्फुटितसाल° for सोऽभितः स्फटिकसाल°. ४. T. and I. read °कवाट° for °कपाट°. ५. I. reads °वसन्ति° for °वन्ति°. ६. In I. two letters are not quite legible, but its reading appears to be धैर्यवान् or धूमवान् and T. reads शौर्यवान् both for योगवान्.

तत्र वैद्रुमगवाक्षमुच्छ्रितं[1]
हेमहर्म्यमवलोकते स्म सः ।
मेरुशृङ्गमिव[2] धातुताम्रया[3]
सन्ध्यया कृतपदं क्वचित्क्वचित् ॥ ६४ ॥
अग्रतस्स[4] च यशोभटो ऽविशत्
सोऽथ कौतुकहृतस्तदङ्गणम्[5] ।
इन्द्रनीलमणिकान्तिमेचकं
व्योम सारुण[6] इवोष्णदीधितिः ॥ ६५ ॥
पद्मरागरचितालवालका[7]
वेदिकामणिविटङ्कविस्तृता ।
तेन तत्र ददृशे कुतूहलाद्
अन्तिके कनकमाधवीलता ॥ ६६ ॥

स्त्रीदर्शनम् ।

तत्तले स्थितिमुपेयुषा श्रमात्
तेन काचिदबला व्यलोकत ।
निर्गता झटिति[8] हेमवेश्मतश्
श्रीः[9] सुवर्णकमलोदरादिव ॥ ६७ ॥
अंशुकेन शरदिन्दुबन्धुना
स्वैरागितेव[10] यशसाऽवभासिता ।

१. T. reads °मुद्रितं for °मुच्छ्रितं. २. K. substitutes °तुङ्ग° for °शृङ्ग°. ३. T. reads °माम्रया for °ताम्रया. ४. I. reads स्मर° for स च. ५. T. reads °हृदयस्तदङ्कणम् and I. °हृतस्तदङ्गनम् both for °हृतस्तदङ्गणम्. ६. T. reads सारुणं for सारुण. ७. T. reads °वालकौ for °वालका. ८. T. reads झगिति for झटिति; while K. reads °वेश्मनः for °वेश्मतश्. ९. T. reads श्रीसुवर्ण° for श्रीःसुवर्ण°. १०. K. reads स्वाश्रितेव यशसोऽवभासिना for स्वागितेव यशसा ऽवभासिता.

कान्तिमत्यधरनीलवाससा
यामुनेन[1] पयसेव[2] जाह्नवी ॥ ६८ ॥

बन्धुजीवकुमुदच्छवी मुखे
बिभ्रतीव कुरुविन्दकुण्डले[3] ।
शर्वरीव सितपक्षपर्वणश्
शीतदीधितिपतङ्गमण्डले ॥ ६९ ॥

शोभिता किमपि हारलेखया
भिन्नखेलगतिलोलयोरसि ।
तत्क्षणस्फुटितकुन्दशुद्धया
गन्धवाहपदवीव मञ्जया ॥ ७० ॥

आननेन ललिताक्षिपक्ष्मणा
निर्यदुज्ज्वलकपोलकान्तिना ।
कुर्वतीव फणिलोकमङ्कितं
यामिनीतिलकबिन्दुनेन्दुना ॥ ७१ ॥

पुष्पदाम दधती सषट्पदम्
दक्षिणेन शशिपाण्डुपाणिना ।
साक्षतं सदधि-दूर्वयाञ्चितं[4]
हेमपात्रमितरेण बिभ्रती ॥ ७२ ॥

कुलकम्[5] ।

तन्निरीक्षणसविस्मयं ततः
पार्थिवं जनितकौतुकः शुकः ।

१. I. reads यामुमेन for यामुनेन, but it seems incorrect. २. T. reads पयसेव for पयसेव. ३. T. and I. read कुरविन्द° for कुरुविन्द°. ४. K. reads °याङ्कितं for °याञ्चितं K. substitutes लीलया for बिभ्रती. ५. T. does not insert this.

इत्युवाच मणिपञ्जरे स्थितो
बालचूतविटपावलम्बिनि ॥ ७३ ॥

शुकवाक्यम् ।

सत्क्रियां रचयितुं तवातिथेर्[1]
नर्मदा भगवतीयमुद्यता ।
श्लाघनीयचरितो जगत्त्रये
कस्य नाऽसि[2] बहुमानभाजनम् ॥ ७४ ॥

देव पन्नगवधूभिरुज्ज्वलं[3]
वल्लकीकलरवं प्रियैस्सह ।
मल्लिकाधवलमत्र गीयते
केलिरत्नभवनेषु ते यशः ॥ ७५ ॥

दुर्मना नृप[4], पथाऽमुना गता
सा विलासवसतिः शशिप्रभा ।
तत्सखीजनकथान्वय[5]श्रुतेर्
युष्मदागमनमूर्हितं[6] मया ॥ ७६ ॥

दुर्लभोऽयमतिथिर्ममापि[7] तत्
गृह्यतामुचितया सपर्यया ।
पार्थिवो हि नवसाहसाङ्क-
इत्येष सीयकनरेन्द्रनन्दनः ॥ ७७ ॥

---

१. T. reads तवातिथे for तवातिथेर्. २. K. reads नास्ति for नाऽसि. ३. I. reads उच्छलद्वल्लकी° and T. उज्ज्वलद्वल्लकी° for उज्ज्वलं वल्लकी°; while in I. the original letter appears ल, but it is made न. ४. T. reads °पपथ-ताऽमुना for नृप पथाऽमुना. ५. T. reads °कथानय° for °कथान्वय.° ६. T. reads °मूहिमं मया and K. °मूहि यन्मया° for °मूर्हितं मया. ७. K. reads ममापतत्, T. ममाम्ब तत् both for ममापि तत्; while the reading of I. is quite illegible, It may be ममाम्ब तत् or something like that.

पेशलोक्तिनिपुणस्य पक्षिणस्
तस्य गामिति निशम्य सस्मितः ।
तामथ प्रणमति स्म निम्नगाम्
इन्दुसूतिमवनीन्दुरादृतः ॥ ७८ ॥

कुलकम्[1] ।

नर्मदाकृतः सत्कारः ।

कारितासनपरिग्रहे पुरो
भूपतावपचितिं विधाय सा ।
आस्त मौक्तिकशिलातले ततस्
चेतसीव सुकवेः सरस्वती ॥ ७९ ॥

स्थित्वाथ किञ्चित्तमवन्तिनाथम्
अपृच्छदच्छन्न[2]कुतूहला सा ।
निवेद्यतां मानव[3]देव कस्मात्
अलङ्कृता भूमिरियं त्वयेति ॥ ८० ॥

तस्यै शशंस निजमा मृगयाविहारात्
वृत्तान्तमन्तविरसं स विशुद्धवृत्तिः ।
कान्तास्मृतिप्रसभ[4]कण्टकिताङ्गजात-
लज्जावनम्रवदनो नवसाहसाङ्कः ॥ ८१ ॥

इति[5] श्रीपरिमलापरनाम्नः मृगाङ्कदत्तसूनोः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते नागलोकावतारो नामाष्टमः सर्गः ॥ ८ ॥

---

१. K. and T. do not insert कुलकम्. २. T. reads °च्छिन्न° for °च्छन्न°. ३. K. reads मालव° for मानव°. ४. T. reads °स्मितिप्रसह° for °स्मृतिप्रसभ°. ५. I. reads इति नवसाहसाङ्कचरिते परिमलस्य कृतौ नागलोकावतारो ऽष्टमः सर्गः T. इति परिमलकालिदासस्य कृतौ साहसाङ्कचरिते नागलोकावतारो नाम सप्तमः सर्गः

## अथ नवमः सर्गः ।

### नर्मदावाक्यम् ।

अथ स्वरेणाङ्गणदीर्घिकाणां[२]
संवाहयन्ती कलहंसनादम् ।
तमित्यवन्तीश्वरमा बभाषे
सा मेकलक्ष्माधरराजकन्या ॥ १ ॥

नास्य[३] क्षितीशोपकृतं जनस्य
कियत् तया पन्नगराजपुत्र्या ।
यस्याः कृते सम्प्रति भूषितेयम्
भूमिस्त्वया भूशशलाञ्छनेन[४] ॥ २ ॥

इदं नृप त्वामवलोक्य जातम्
मनः प्रमोदेन ममास्वतन्त्रम् ।
नो कस्य[५] लोकत्रयसम्मतानाम्[६]
भवेत् सतां सङ्गतमुत्सवाय[७] ॥ ३ ॥

अद्यैष कस्यापि मया शुभस्य
त्वद्दर्शनेनानुमितो[८] विपाकः ।
आतिथ्यमक्ष्णोः कथमन्यथैवम्
आयान्ति रत्नानि भवद्विधानि ॥ ४ ॥

---

१. The 82nd leaf of the Manuscript I. is torn into pieces; some being lost we have only 3. So the colophon of the last canto nearly first 6 or 7 stanzas of this canto cannot be fully settled from the portion of I. २. T. reads °शाङ्कण° for °णाङ्गण°. ३. T. reads नास्याः for नास्य. ४. K. reads भूषङ्कश° for भूशश°. ५. T. reads नाकस्य for नो कस्य. ६. K. reads °सङ्गतानां for सम्मतानां. ७. T. reads संहृत° and K. स्वहृत° both for सङ्गत°. ८. T. reads °नमितो for °नुमितो.

स वत्स, जाते जनकः कृतात्मा
सा पुण्यमूर्तिर्जननी जगत्सु ।
महीकलापोद्वहनादिपौत्रो
पुत्रो ययोस्त्वं नरलोकपालः ॥ ५ ॥

रूपेण तेजस्वितयाऽऽर्जवेन
प्रियंवदत्वेन तवामुना च ।
दिलीप-दुष्यन्त-भगीरथादीन्
तानादिराजान् झटिति स्मरामि ॥ ६ ॥

समानभावैस्त्रिभिरेव मन्ये
समुद्रनेमिर्वसुधा धृतेयम् ।
भुजङ्गमेन्द्रेण च मेरुणा च
दोष्णा च मौर्वीकिणशोभिना ते ॥ ७ ॥

त्वयि स्थिते सम्प्रति जागरूके
जगद्विधेयेषु विधूतचिन्तः ।
करोति नेत्रे भगवानवैमि
स योगनिद्रामुकुले मुकुन्दः ॥ ८ ॥

न किञ्चिदिक्ष्वाकुकुलावतीर्णात्
रथाङ्गपाणेः परिहीयते ते ।
अजायताम्भोजदृशा वियोगो
वने यथा तस्य तथा तवापि ॥ ९ ॥

---

१. K. reads सवहासजातिर्जनकः for स वत्स, जाते जनकः. २. T. reads कृतात्मना for कृतात्मा. ३. T. reads °पोषि पुत्रे ययुस्त्वनरलोकपालः for °पौत्रो पुत्रो ययोस्त्वं नरलोकपालः. ४. T. reads झगिति for झटिति. ५. I. reads °चिन्तः for °चिन्तः; while T. omits ये. ६. K. reads फणीन्द्रे for मुकुन्दः.

अकृत्रिमोऽयं गुणवत्सु जाने
जात्यैव ते पार्थिव पक्षपातः ।
यत् प्रौढलावण्यसुधालवन्त्या
तया विना चेतसि ताम्यसीव ॥ १० ॥

अलं विषादेन घनाधिरूढा
ललामभूता जगतोऽखिलस्य ।
तवाङ्कमभ्येष्यति साऽचिरेण
शशिप्रभा पार्थिवकैरवस्य ॥ ११ ॥

इतोऽद्य यान्ती पुरतो मया सा
दृष्टा भुजङ्गाधिपतेस्तनूजा ।
उदग्रभोगैरहिभिः परीता
लतेव तन्वी हरिचन्दनस्य ॥ १२ ॥

उद्दण्डहेमाम्बुरुहासु खेलत्
एतासु लीलागृहदीर्घिकासु ।
समुत्कयन्ती कलहंसयूथम्
आमञ्जुना नूपुरसिञ्जितेन ॥ १३ ॥

व्यापारयन्ती वलितानेन्दुः
पश्चाद्दृशौ केतकपत्त्रदीर्घे ।
इतस्ततः शून्यतया स्खलन्ती
समेऽपि मार्गे ददती पदानि ॥ १४ ॥

१. I. reads °हुजीनजा° for °ह जाने जा°. २. K. reads यन्मुग्ध° for यत्प्रौढ°.
३. T. reads तवाधिरूढा for घनाधिरूढा. ४. T. reads पलिता° for वलिता°.
५. I. reads °दीर्घम् for °दीर्घे. ६. K. reads दधती for ददती.

विस्रस्तमाल्यः श्लथबन्धनत्वात्
अंसावकीर्णां कबरीं वहन्ती।
कलिन्दकन्यामसृणोर्मिनीलां
निस्त्रिंशलेखामिव मन्मथस्य ॥ १५ ॥

मुखं निशाघ्रातमिवारविन्दं
विषादवीतप्रभमुद्वहन्ती।
विलुम्पती निःश्वसितेन कान्तिम्
आपाटलस्याधरपल्लवस्य ॥ १६ ॥

उन्मोचयन्तीमलकाग्रमेत्य
लग्नं चलत्कुण्डलरत्नकोटौ।
किमप्युदञ्चद्दशनांशुलेखा
सखीं शनैस्सस्मितमालपन्ती ॥ १७ ॥

सुधासितं क्षौममिवास्तृतं तं
नखांशुरेखावलयच्छलेन।
कृतं दधानोपरि पाणिपद्मम्
उदग्रकम्पस्य कुचद्वयस्य ॥ १८ ॥

गतानि सद्यः श्लथतां सखीभिर्
विहस्य साकूतविलोकितानि।
क्रमेण किञ्चित् प्रतिसारयन्ती
विलज्जमाना मणिकङ्कणानि ॥ १९ ॥

---

१. K. reads °नीला निस्त्रिंशलेखाकुसुमायुधस्य for नीलां निस्त्रिंशलेखामिव मन्मथस्य. २. T. reads निषाद° for विषाद°. ३. T. reads °पाटवस्य for °पाटलस्य.

अशोकपुष्पग्रथितां दधाना
आलम्बमालामवलग्नमध्या ।
आरोपितज्येव जगज्जयाय
स्वचापलेखा मकरध्वजेन ॥ २० ॥

आर्द्रव्रणाङ्कस्य कृपार्द्रचित्ता
केलीमृगस्य स्वयमेव तस्यै ।
आचुम्बती पाण्डुकपोललेखं
वतंसदूर्वाङ्कुरमर्पयन्ती ॥ २१ ॥

मार्गेषु रूढासु निरूढभावात्
द्विरेफसम्पातसमाकुलासु ।
लतासु पुष्पावचयच्छलेन
पदे पदे वत्स विलम्बमाना ॥ २२ ॥

कुलकम् ।

त्वदीयविश्लेषमवाप्य बाला
सा लक्ष्यते किञ्चिदनिर्वृतेव ।
भवादृशामेकपदे वियोगो
न कस्य राजेन्द्र, मनो दुनोति ॥ २३ ॥

पृथुप्रतापस्सविता यथैव
यथा कलानां निधिरोषधीशः ।

---

१. T. reads °मवलम्ब° for °मवलग्न°. २. T. reads °चिन्ता for °चित्ता. ३. K. reads स्वयमागतस्य for स्वयमेव तस्यै. ४. I. reads °मर्थयन्ती for °मर्पयन्ती. ५. I. reads मार्गास्तरूढाणिपूढभावा for मार्गेषु रूढासु निरूढभावा. ६. K. reads °भया for °भावात्. ७. T. reads °पचय° for °वचय°. ८. K. and T. do not insert कुलकम्. ९. K. reads तीव्रम् for किञ्चित्. १०. K. and T. read यथैव for यथैव.

यथा वसन्तः सुमनोऽनुकूलस्
तथाऽसि भूमिः स्पृहणीयतायाः ॥ २४ ॥

नायकवाक्यम्।

इति क्षितीशश्रुतिशुक्तिपेयाम्[1]
उदीर्य वाचं विरराम रेवा।
स च स्मितद्योतितदन्तमेवम्
उवाच तां मध्यमलोकपालः ॥ २५ ॥

स्थाने यदा[2]ह्लादयसि प्रपन्नं[3]
पीयूषधारामधुरैर्वचोभिः।
सुधैकसूतिस्स यदाकरस्ते
चण्डीशचूडाभ[4]रणं शशाङ्कः ॥ २६ ॥

ऋजुः प्रकृत्यासि परं तद[5]म्ब
वीचीषु पर्याप्तमनार्[6]जवं ते।
न केवलं सा पयसि प्रसक्ति[7]र्
आलक्ष्यते ते [8]बत मानसेऽपि ॥ २७ ॥

यां जूट[9]मध्ये च शशाङ्कमौलेर्
उन्निद्रकुन्दस्रगिवाऽवभाति।

१. I. reads °पीताम् for °पेयाम्; while T. reads °पीनां निपीय वाचं for पेयामुदीर्य वाचं. २. I. omits दा; while T. substitutes था for दा. ३. T. reads प्रयत्नं for प्रपन्नं. ४. T. reads °करणं for °भरणं. ५. I. reads तदेव for तदम्ब. ६. I. substitutes °य° for °ज°. ७. I. reads प्रसक्तिर् for प्रसक्तिर्. ८. I. omits ते, but in the marginal correction appears मू for the same. ९. I. reads चूड° for जूट;° while K. reads या चूडमध्येऽम्ब for या जूटमध्ये च and in the margin appears another reading जूटमध्याऽम्ब for जूटमध्ये च.

तामप्यतीव त्रिजगत्प्रतीक्ष्यां
त्रिःस्रोतसं पुण्यतयाऽभिशेषे ॥ २८ ॥

यासोऽस्य शक्तिः प्रसराम्बुपङ्के
त्वया धृता धर्मविहारवीथिः ।
सलीलमुत्कूलकुलाचलेयम्
मही महासूकरदंष्ट्र एव ॥ २९ ॥

भवादृशीनां महतां नदीनाम्
अद्भिर्जगत्यस्तमितोपसर्गे ।
सुखं सदैवासुरजित् समुद्रे
निद्राति पर्यङ्कितपन्नगेन्द्रः ॥ ३० ॥

असन्तमप्यम्ब मयि प्रसन्ना
सम्भावनाभारमहो निधत्से ।
अस्त्येव भक्तेष्वतिवत्सलत्वात्
बलाद्गुणारोपणकौतुकं ते ॥ ३१ ॥

अनेन मे कोऽपि हृदि प्रहर्षस्
तव प्रसादातिशयेन जातः ।
अनार्द्रतामिन्दुमरीचिसख्ये
कियच्चिरं चन्द्रमणिर्बिभर्ति ॥ ३२ ॥

---

१. T. does not insert this stanza; while I. reads—
आसास्य शक्तिः प्रसरा वयं के
त्वया धृता धर्मविहारवीथिः ।.
२. I. reads सदेवासुर° for सदैवासुर°. ३. T. reads पर्यङ्कृत° for पर्यङ्कित°. ४. K. reads प्रसन्ने and T. °हार° for प्रसन्ना and °भार° respectively. ५. T. reads अस्त्येव भक्तोज्झित° for अस्त्येव भक्तेष्वति°. ६. K. reads भातः for जातः.

विधाय तत्तादृशमिन्द्रजालं
सा केन नीता फणिराजकन्या ।
अपश्यतो हेतुमिहोपपन्नं
किमप्यहो विस्मयते मनो मे ॥ ३३ ॥

अज्ञानमस्मिन्विषये किमन्यत्
ममैतदर्हस्यपनेतुमम्ब ।
दिनान्तसम्मूर्च्छितमन्धकारं
निशामुखस्येव शशाङ्कलेखा ॥ ३४ ॥

पुनर्नर्मदावाक्यम् ।

उक्त्वेति तूष्णीमभवन्नृसोमः
सा सोमसूतिस्सरिदित्युवाच ।
अत्रेतिवृत्तं कथयाम्यशेषं
निशम्यतां मालवलोकपाल ॥ ३५ ॥

गृहदेवतावाचः ।

यदैव सा तर्जितचन्द्रकान्तिर्
अजायतेन्दीवरपत्रनेत्रा ।
चित्रस्थितानां गृहदेवतानाम्
इति स्फुरन्ति स्म तदैव वाचः ॥ ३६ ॥

रत्नाकरस्त्वं भुजगेन्द्र, जातं
कन्या तव श्रीः शुभलक्षणेयम् ।

---

१. T. reads कन्या for नीता. २. T. reads उक्त्वैव for उक्त्वेति. ३. T. and I. read °पालः for °पाल. ४. T. reads गृहदेवतानां इत्युक्तवन्ति स्म तदैव for गृहदेवतानामिति स्फुरन्ति स्म तदैव. ५. I. reads रत्नाकरस्त्वं भुजगेन्द्र जातं कन्या तव and K. रत्नाकरस्ते भुजगेन्द्र जातः कन्या यतः for रत्नाकरस्त्वं भुजगेन्द्र जातं कन्या तव.

वक्षःस्थलं मध्यमलोकभर्तुर्
विभूषयित्री पुरुषोत्तमस्य ॥ ३७ ॥

भुजङ्गवंशार्णवकौमुदीयम्
इयं पताकाऽस्य रसातलस्य ।[1]
उपागतेयं निधनाग्रदूती
वज्राङ्कुशस्यासुरपुङ्गवस्य ॥ ३८ ॥[2]

कुलकम्[3] ।

स्ववीर्यपर्यस्तपुरन्दरेण
तेनासुरेन्द्रेण कदर्थितस्य ।
तेजश्चिरादुच्छ्वसितं[4] तदाऽभूत्[5]
इति श्रुते[6] भोगभृतां कुलस्य ॥ ३९ ॥

तद्देहकान्तिस्तिमिरं व्यनैषीत्
यदत्र मोघीकृतरत्नदीपा ।
पित्रा तदस्याः कृतमर्थयुक्तम्
आल्हादनं नाम शशिप्रभेति ॥ ४० ॥

ततस्सुधासूतिकराभिरामैर्
गुणैः परीता सहजन्मभिः सा ।
शनैश्शनैर्वृद्धिमवापदत्र[7]
रसातले बालमृणालिकेव ॥ ४१ ॥

---

१. K. reads बिललोकलक्ष्म्याः for °स्य रसातलस्य. २. K. °दुर्मदस्य for °पुङ्गवस्य. ३. This do not appear in K. and T. ४. I. reads चेतः for तेजः and substitutes श्रु for छ्रु. ५. T. reads श्रुतेः for श्रुते. ६. K. and T. read चिरात् for पित्रा. ७. T. reads मयाऽऽप° for मवाप° and substitutes भाल° for बाल°.

शशिप्रभापितुः प्रतिज्ञा ।

यदर्थिताऽभूदनुबद्धमानैस्
सुरैश्च सिद्धैश्च महोरगैश्च ।
तेषां पुरस्तादकृत व्यवस्थाम्
इत्येकदा संसदि पन्नगेन्द्रः ॥ ४२ ॥

गुऽप्तोभितो यस्त्रिदशारिवीरैर्
वज्राङ्कुशाख्यस्य महासुरस्य ।
अभूत लीलागृहदीर्घिकेह
हैमं हरेर्नाभिरिवारविन्दम् ॥ ४३ ॥

आनीय तन्यो दुहितुर्ममास्याः
कर्णावतंसप्रणयीकरोति ।
तस्येयमिष्वासभृतः कलत्रं
पार्थस्य पाञ्चालनृपात्मजेव ॥ ४४ ॥

कुलकम् ।

तेनैवमुक्ते च तदा परेषु
तमर्थमङ्गीकृतवान्न कोऽपि ।
वन्यद्विपादुद्गतदानराजेः
कः कुम्भमुक्ताफलमाददीत ॥ ४५ ॥

ततः प्रभृत्यद्भुतरूपरेखा
सा बालिकाभूदवरा वरापि ।

१. T. and I. read तदर्थिभावादनुबध्यमानैस् for यदर्थिताऽभूदनुबद्धमानैस् २. T. reads संसति for संसदि. ३. T. reads °हितो for °भितो. ४. T. reads °केव for °केह. ५. I. reads कलावतंस° for कर्णावतंस°. ६. T. and K. do not insert this. ७. K. reads °माहरेत for °माददीत. ८. T. reads पालिका for बालिका.

चित्ते वचस्तत् कुलदेवतानां
कृत्वापि तस्यास्स च नान्वशोचत ॥ ४६ ॥

सम्प्रत्यवैमि प्रथिता यदो ऽतः
स्वर्गे च भूमौ च भुवस्तले च ।
नीतोऽसि नेत्रातिथितां त्वमस्याः
पुण्येन जन्मान्तरसम्भृतेन ॥ ४७ ॥

आनेतुकामेन भवन्तमत्र
निजं वचस्तन्नयता प्रतिष्ठाम् ।
आप्तप्रयत्नेन तथा स मन्ये
फणीश्वरेणोपकृतः प्रपञ्चः ॥ ४८ ॥

एकः क्षितौ साहसिकस्त्वमेव
नान्योऽस्ति राजन्नवसाहसाङ्कः ॥
निसर्गदुर्गामपि भूमिमेतां
स्वोद्यानवीथीमिव यः प्रविष्टः ॥ ४९ ॥

तदस्य कार्यस्य पुरस्कृतस्य
यतस्व सीमान्तविलोकनाय ।
विगाहमानोऽम्बरमर्धमार्गं
निवर्तते जातु किमुष्णरश्मिः ॥ ५० ॥

इतोऽस्ति गव्यूतिशतार्धमात्रं
गत्वा पुरी रत्नवतीति नाम्ना ।

---

१. T. reads प्रथिता च शानभूषुमे स्वर्गे च for प्रथिता यदाऽतः स्वर्गे च भूमा च.
२. I. reads आप्त° for आप्त°. ३. I. substitutes °व° for °प°; while T. reads अपकृतः for उपकृतः. ४. T. reads सौधान° for स्वोद्यान°. ५. T. reads °मध्य° for °मर्ध°; while in I. there appear three letters after मर्ध, namely, रथन.

विनिर्मिता शिल्पकलामयेन
मयेन या नाकजिगीषयेव ॥ ५१ ॥
तस्या ऽसुरेन्द्रस्य नराधिपेन्द्र
जगद्द्रुहः सा किल राजधानी ।
समेधितस्याब्जभुवा वरेण
रणेष्ववध्यो मरुतां भवेति ॥ ५२ ॥
स मौलिरत्नानि महोरगाणाम्
उत्खाय चोत्खाय च कौतुकेन ।
करोति निर्वासितनायकेषु
निजाङ्गनाहारलतान्तरेषु ॥ ५३ ॥
स बाष्पपर्याकुललोचनानि
निःश्वासभिन्नाधरपल्लवानि ।
करोति वक्त्राण्यमराङ्गनानाम्
उत्सन्नलीलास्मितचन्द्रिकाणि ॥ ५४ ॥
कृताङ्गदः कम्बल-कालियाभ्यां
यज्ञोपवीतीकृतशङ्खचूडः ।
स तक्षकापादितकण्ठभूषो
बिभर्ति लीलामशिवश्शिवस्य ॥ ५५ ॥
आस्तां किमन्यैः फणिभिस्स चिन्त्यस्
तस्यापि शेषस्य च वासुकेश्च ।

---

१. T. reads रत्न° for शिल्प;° while K. reads शिल्पकलाधरेण for शिल्पकलामयेन. २. I. omits this half stanza:—

करोति वक्त्राण्यमराङ्गनानाम् ।
उत्सन्नलीलास्मितचन्द्रिकाणि ॥ ५४ ॥,

but it appears in the correction.

राहुर्यथा विश्वभयैकहेतुस्
ताराधिपस्याहिमदीधितेश्च ॥ ५६ ॥

खगेन्द्रभङ्गेन तथा तथा च
न सर्पयज्ञे जनमेजयस्य ।
निधानमातङ्कपरम्पराणां
जातो यथा सम्प्रति नागलोकः ॥ ५७ ॥

हरेस्त्वमंशो ऽत्र कृतावतारस्
तस्याऽसुरेन्द्रस्य निबर्हणाय ।
अवैमि लोकत्रयकण्टकस्य
लङ्काधिपस्येव स मैथिलीशः ॥ ५८ ॥

श्रीकण्ठ-वैकुण्ठ-पुरन्दराद्यैर्
उपेक्षितं यत्त्रिदशैरशक्त्या ।
कृतस्य तस्यास्य भरं विसोढुं
सम्भाव्यसे मे नृपते त्वमेव ॥ ५९ ॥

किमन्यदुत्तिष्ठ गृहाण यात्रां
वज्राङ्कुशां प्रत्यमितप्रताप ।
तच्चावतंसीकुरु हेमपद्मम्
आनीय भूशक्र शशिप्रभायाः ॥ ६० ॥

सा ते समासाद्भुतसाहसस्य
वत्साऽङ्कमभ्येतु फणीन्द्रकन्या ।
सीता यथा दाशरथेस्सलीलम्
आरोपितत्र्यम्बककार्मुकस्य ॥ ६१ ॥

१: I. reads °यज्ञो for °यज्ञे. २. T. reads अथ for अस्य and K. असि for the same. ३. T. reads मर्त्यपते for मे नृपते.

अगाधपातालतलोद्गतानि[1]
त्रिनिद्रकुन्दच्छदसुन्दराणि ।
लोकद्वये सम्प्रति ते यशांसि
आकल्पवल्लीफलवच्चरन्तु[2] ॥ ६२ ॥

प्रसादमात्रेन चिराद्विलीने
तस्मिन् सुरारातिघनोपरोधे ।
मुखेन्दुना पन्नगसुन्दरीणां
पुनः[3] समागच्छतु पत्रलेखा ॥ ६३ ॥

आसीत् पुरस्तात्त्रिपुराङ्गभङ्गे
यन्मङ्गलं बालमृगाङ्कमौलेः ।
महासुरैर्भाविनि साम्पराये
तवास्तु तत् संयुगजामदग्न्य[4] ॥ ६४ ॥

पन्थाश्शिवो ऽयं पुरतो ऽत्र गन्ता
वङ्कुर्मुनिर्लोचनगोचरं ते ।
उपाचरेस्तं च तथाविधानां
भक्तिं हि गां कामदुहामुशन्ति[5] ॥ ६५ ॥

इत्युदीर्य मणिकान्तिकन्दलीः[6]
कल्पितं त्रिदशचापमस्य सा ।
आ मुमोच निजकङ्कणं भुजे
ज्याकिणाङ्ककठिणीकृतत्वचि ॥ ६६ ॥

---

१. I. reads °लतो° for °तलो°. २. T. and I. read °फलसञ्चरन्तु for °फलवच्चरन्तु. ३. K. and T. read पुरः for पुनः. ४. T. reads °जामदग्न्यः for °जामदग्न्य. ५. I. reads °मुषन्ति for °मुशन्ति. ६. K. and T. read °कन्दलैः for °कन्दलीः.

नर्मदोक्तस्वीकारः।

अवददथ से साहसोन्मुखस्ताम्  
इह हि वयं वचसि स्थितास्तवेति।  
तडिदिव न चिरादुदीरिताशीस्  
सरिदपि साऽस्य पुरस्तिरोबभूव॥ ६७॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये नर्मदासंवादो नाम नवमः सर्गः॥ ९॥



१. T. omits स. २. K. reads झटिति च न चिरात् and T. तटिति वनचरात् for तडिदिव न चिरात्. ३. T. reads इति कालिदासस्य कृतौ साहसाङ्कचरिते ऽष्टमः सर्गः, I. इति परिमलस्य नवसाहसाङ्कचरिते नर्मदासंवादो नवमः सर्गः.

# अथ दशमः सर्गः ।



### नायकस्य रमाङ्गदम्प्रति प्रश्नः।

अथ मेकलाचलसुतातिरोहितौ<br>
अतिमात्रविस्मयरसार्द्रमानसः ।<br>
दशनच्छविच्छुरितपाटलाधरस्<br>
स रमाङ्गदं नृपतिरित्यवोचत ॥ १ ॥

अधिरोहति स्वयमचिन्तिताऽप्यहो<br>
शुभसम्पदङ्कमपराङ्मुखे विधौ ।<br>
सवपुर्विलोचनपथं यदावयोर्<br>
अमृतांशुसूतिरियमापदापगा ॥ २ ॥

इदमिन्द्रजालमिति मे समुत्थिताम्<br>
मतिमेतदर्पितमुदारया तया ।<br>
विकसन्मरीचिरचितेन्द्रकार्मुकं<br>
करवर्ति रत्नवलयं विलुम्पति ॥ ३ ॥

अयि मेकलाद्रितनयापुरस्कृते<br>
क्रियते किमत्र वद कृत्यवस्तुनि ।<br>
तव यत् सदा नयरहस्यवेदिनो<br>
न धियश्चरन्त्यनयपांसुले पथि ॥ ४ ॥

---

१. I. reads विभ्रमन्° for विकसन्°. २. T. reads किमत्यवद for किमत्र व° ३. I. reads नयवहस्य° for नयरहस्य°; while K. reads नयहृदस्यतेश्चिरं न गिरः for नयरहस्यवेदिनो न धियः.

रमाङ्गदवाक्यम् ।

इति पार्थिवेन कथिते दधन्मनाक्
पुलकेन चुम्बितकपोलमाननम् ।
इदमात्तनीतिपथमाददे वचः
स्मितपुष्पिताधरदलो रमाङ्गदः ॥ ५ ॥

इह किं प्रतिस्फुरति मे तवाग्रतो
नयशास्त्रनीरनिधिपारदृश्वनः ।
अवलीढविश्वतमसः पुरोरवेर्
न हि जातु दीपकशिखा प्रकाशते ॥ ६ ॥

विषये ऽत्र मौनमुचितं हि मादृशाम्
अवशस्तथापि कथयामि किञ्चन ।
क्षितिपालमौलिमणिवेणिकोतिथेस्
तव केन शासनमिदं विलङ्घ्यते ॥ ७ ॥

प्रथमं हि मण्डलमखण्डशक्तिभिर्
विजिगीषुभिः स्वमभितः प्रसाध्यते ।
परमण्डले तदनु नीतिपारगैर्
अवनीपुरन्दर, करः प्रसार्यते ॥ ८ ॥

तदपास्यमेवमवितर्कितोत्थिते
परिपन्थिनामिह विधेयवस्तुनि ।
यदि नाभविष्यदभिमानशालिनस्
तव राज्यमुद्धृतसमस्तकण्टकम् ॥ ९ ॥

---

१. I. reads ग्लपितेन for पुलकेन. २. T. reads °मुदितं for °चुम्बितं. ३. T. and I. read °तिथिः for °तिथेः. ४. T. reads प्रसाद्यते for प्रसाध्यते. ५. K. reads °मवितर्कितोर्थिते for °मवितर्कितोत्थिते. ६. I. reads परिपन्थिता° for परिपन्थिना°; while K. reads इव for इह. ७. I. omits two letters after क.

श्रुत-शक्ति सङ्कलितमन्त्रनिश्चयैर्
उपलब्ध[1]षड्गुणविवेकवर्त्मभिः ।
तदुपायतत्त्वमधिगम्य धूः क्षितेस्
तव मन्त्रिभिर्नृप दुरुद्वहोह्यते ॥ १० ॥

अतिसान्द्रकाञ्चनमरीचिपिङ्गलं
दिगुपाहित[2]प्रचुरपत्रशोभिनः ।
तव कोश[3]मुत्सृजति न क्षणं रमा
परमारवंशसरसीसरोरुह ॥ ११ ॥

प्रियकीर्तिया जयपवित्रिताशयास्
तरसा[4] तृणीकृतजगत्त्रया युधि ।
जगतीविशेषक तवानुजीविनो
निवसन्त्यवन्तिविषये सहस्रशः ॥ १२ ॥

पृथिवीभृतः प्रथितविक्रमेण ये
गमितास्त्वया वशमुपायसम्पदा ।
नयवर्त्मगाः[5] क्षितिपते तवान्यथा
न भवन्ति भाविसमराभिशङ्कया ॥ १३ ॥

अपकर्तुमत्र समये तवात्तभीर्
मनसापि हूणनृपतिर्न वाञ्छति ।
इभ[6]कुम्भभित्तिदलनोद्यमे हरेर्[7]
न कपिः कदाचन सटां विकर्षति ॥ १४ ॥

---

१. T. reads उपलब्धि° for उपलब्ध°. २. K. reads द्विगुणाहित° for दिगुपाहित°. ३. T. reads शोक° for कोश°. ४. I. reads सुरसा for तरसा. ५. K. and T. read नयवर्त्मना for नयवर्त्मगाः. ६. T. reads इह for इभ°. ७. I. reads हरे न कपि कदाचन शटां for हरेर्न कपिः कदाचन सटां and it seems throughout incorrect; while K. and T. read सटाः for सटां.

असिकान्तिजालजटिलांसबाहुना
रणसीम्नि नाथ निहतेषु भर्तृषु ।
भवताऽत्र वागडवधूजनः कृतो
रतिसन्धिविग्रहकथापराङ्मुखः ॥ १५ ॥

अधुनापि देव सुरलाङ्गनाजनैर्
विजयप्रशस्तिरिव लिख्यते तव ।
गलदञ्जनाश्रुपृषतावलिच्छलाल्
लसदिन्दुपाण्डुषु कपोलभित्तिषु ॥ १६ ॥

रभसादपास्य मणिकङ्कणावलीः
कनकारविन्दकटकेषु तेऽसिना ।
न किमर्पितानि नृप लाटयोषितां
स्फटिकाक्षसूत्रवलयानि पाणिषु ॥ १७ ॥

नयनाम्बुभिः स्नपितधूसराधराः
प्रतिवद्धरूक्षमलिनैकवेणयः ।
निहिता न किं महति शोकसागरे
जगतीन्द्र कौसलपतेः पुरन्ध्रयः ॥ १८ ॥

---

१. T. and K. read °भाल° for °जाल°. २. I. reads निहितेषु for निहतेषु. ३. I. substitutes °ला° for °ना° and omits स in the word प्रशस्ति. ४. I. reads °शृङ्गषरे वलिच्छला लशदिन्दुपाण्डुकपोल° for °पृषतावलिच्छलाल् लसदिन्दुपाण्डुषु कपोल°. ५. T. reads °वलिः for °वलीः. ६. I. reads °लडहेषु and T. °कडहेषु for °कटकेषु. ७. T. reads °योषितः for °योषितां. ८. T. mutilates one letter before वे and reads °वेणगः for °वेणयः. ९. T. reads निहता स्वयं and I. निहितास्त्वया for निहिता न किं. १०. I. reads कोशल° for कौसल° and T. सोषिल for the same. ११. After this stanza I. inserts :—

उदितेन वैरितिमिरद्रुहाभितस्
तव नाथ विक्रममयूखमालिना ।
निहितास्त्वया महति शोकसागरे
जगतीन्द्र कोसलपतेः पुरन्ध्रयः ॥.

It is evident from this that I. repeats the second half of 18th stanza and the first half of the 19th stanza.

उदितेन वैरितिमिरद्रुहाऽभितस्
तव नाथ विक्रममयूखमालिना।
गमिताः प्रभावलयशून्यतां स्फुटि-
स्त्यपरान्तपार्थिववधूमुखेन्दवः ॥ १९ ॥

अतिवेलमुत्तरदिगन्तवर्तिना
समरश्रमाभ्युदितघर्मबिन्दुना।
शरदिन्दुनिर्मलमपायि भूभृताम्
असिपत्रपात्रपतितं त्वया यशः ॥ २० ॥

निजरन्ध्रगोपनपटीयसाऽभितः
पररन्ध्रदृष्टिपटुचारचक्षुषा।
नयभिन्नसाहसभुवा भुवस्तले
भवता समं कथय को विरुद्ध्यते ॥ २१ ॥

नरदेव दैवमधिकृत्य या विपत्
निपतत्यवन्तिविषये कथञ्चन।
शिखिमुक्तमन्त्रहविषा विहन्यते
तव सा वसिष्ठमहसा पुरोधसा ॥ २२ ॥

नृप वासराणि निरुपप्लवाः प्रजाः
सुखमात्मकर्मणि रता नयन्ति यत्।
विजयं जयैकसुहृदोऽस्य सर्वदा
ननु कार्मुकस्य तव तद्विजृम्भितम् ॥ २३ ॥

---

१. I. reads °द्रुमाभितस् and T. °प्रभाभितस्ः both for °द्रुहाऽभितस्. २. I. reads स्फुगिति and T. स्फुगिति for स्फुटिति. ३. K. and T. read °पत्र° for °पात्र°. ४. I° reads °स्त्यवर्ति° for °स्त्यवन्ति°. ५. K. reads °भुक्त° for °मुक्त° and I. °सत्र° for °मन्त्र°. ६. I. reads न नु for ननु.

इति किञ्चिदेव न तव स्वमण्डले
नृप चिन्त्यमस्त्युदितशक्तिसम्पदः ।
अधुना तु नीतिनिहितेन चेतसा
फणिलोककृत्यमिदमेव चिन्त्यताम् ॥ २४ ॥

प्रभुशक्तिरुद्यमपरत्वमर्पिते-
स्त्रिजगच्चमत्कृतिरहङ्कृतिश्च सा ।
असुरस्य तस्य कथिता नरेन्द्र ते
नगरी च मेकलनगेन्द्रकन्यया ॥ २५ ॥

अभिगम्य एव स तवाधुना रिपुर्
मरुतामुदारनिजकार्यसिद्धये ।
श्रुतिलग्नगन्धगजबृंहितः क्षणं
नृप केसरी कथय किं विलम्बते ॥ २६ ॥

नवसाहसाङ्क, न तवाऽसुरादहं
कलयामि सम्प्रति किमप्यतादृशम् ।
विधुतिः कदाचन विभो न भूभृतः
कलविङ्कपक्षपवनेन शङ्क्यते ॥ २७ ॥

भवता यदोच्चलित एष दक्षिणश्
चरणस्तदेव सुरवैरियोषिताम् ।
विगलन्ति देव नयनोदबिन्दवः
शरदिन्दुपाण्डुनि कपोलमण्डले ॥ २८ ॥

---

१. I. substitutes चे for च्चे; while T. निहतेन for निहितेन. २. T. reads °मर्पितं for °मर्पित°. ३. T. reads मेखल° for मेकल°. ४. K. reads °परमारराज for °मरुतामुदार°. ५. I. reads °बृंहितं for बृंहितः. ६. K. reads जय° for नृप. ७. T. reads मया° for तवा°. ८. I. reads संयति for सम्प्रति. ९. K. reads शङ्कयते for शङ्क्यते.

विजयैकसद्मनि गुणः शरासने
तव यावदत्र न नृपाधिरोहति ।
तुहिनच्छटाधवलचामरस्मिता
विलसन्ति तावदसुरालये श्रियः ॥ २९ ॥

कनकारविन्दमरविन्दलोचन
प्रणयेन नैव स समर्पयिष्यति ।
सुरनिर्जयार्जितमदावृते ऽन्तरं
लभते न साम किल तादृशां हृदि ॥ ३० ॥

भवतः कुतोऽपि नृप यावदागमं
न स वेत्ति तावदभियोक्तुमर्हसि ।
सहसाऽन्यथा रहसि मन्त्रिबोधितः
परितः स्वदुर्गघटने यतिष्यते ॥ ३१ ॥

कृतनूतनार्गलकपाटसम्पुटां
सुभटैरुदायुधकरैरधिष्ठिताम् ।
परितस्सुखातपरिखां पुनः पुरीं
रचितैकदुर्गमपथां विधास्यति ॥ ३२ ॥

वलितेऽपि किञ्चन धनुःपरिग्रहे
भुवनत्रयप्रथितसाहसे त्वयि ।

१. T. substitutes यत्र for यावदत्र omitting two letters. २. I. reads असुराशये श्रियः and T. असुरालयश्रियः both for असुरालये श्रियः. ३. T. reads धाम for साम. ४. I. reads हसवत्यतावे° for न सवेत्ति ताव°. ५. T. reads सत्र and I. मन्त्र° for मन्त्रि°. ६. I. omits four letters here and substitutes सुदुर्गटने यतिष्यते for परितः स्वदुर्गघटने यतिष्यते; while T. wrongly reads स्पटते यमिष्यते for घटने यतिष्यते. ७. I. and T. read °कवाट° for °कपाट°. ८. K. reads सु° for स; while I. substitutes बां for खां. ९. I. reads वलिते for वलिते.

अपि जायते धृतिविपर्ययो हरेर्
असुरेषु कैव गणना तपस्विषु ॥ ३३ ॥

नियतं नरेन्द्र, विदधत्फणामणि-
स्फुरदंशुसूत्रितनवातपं नभः।
सुरवैरिवीर्यदृढमत्सरं पुरः
फणिसैन्यमाजिभुवि[1] ते भविष्यति ॥ ३४ ॥

अधुनैव तेऽत्र[2] निजतां व्रजन्ति वा
सुभटाः स्वयं विधिवशेन केचन।
कपयः पुरा रघुपतेर्यथा वने
हनुमत्पतङ्गतनयाङ्गदादयः ॥ ३५ ॥

यदुदीरितश्च पुरुकुत्सकान्तया
सरितोऽसि वङ्क्षुमुनिदर्शनम्प्रति[3]।
प्रतिभाति किञ्चन ममैव तत्र ते
किमु निर्मुखेङ्गितविदस्तदिङ्गितम् ॥ ३६ ॥

अथवैक एव[4] विभुरस्यरेर्वधे
ननु धाम तत् स्फुरति शार्ङ्गिणस्त्वयि[5]।
उदितक्रुधस्त्रिपुरदाहडम्बरे
शरतामवाप किल यत् पिनाकिनः ॥ ३७ ॥

अवलोकयामि शकुनं यथा तथा
तदवैमि पक्ष्मलदृशास्सभान्तरे।

---

१. I. reads भाविं for भाजि°. २. T. reads तेन for तेऽत्र. ३. T. reads °थिपं कुरुस्वदर्शनं for °सि वङ्क्षुमुनिदर्शनं; while I. substitutes °शिकम° for ऽसि वङ्क्षु°. ४. I. reads °वेव for एव. ५. I. reads तत् स्फुरति सा दुहिणस्त्वयि for तत् स्फुरति शार्ङ्गिणस्त्वयि.

न चिरादुपोढपुलकेन पाणिना
कनकारविन्दमवतंसयिष्यसि ॥ ३८ ॥

त्वमिहैव नाथ मणिधाम्नि तिष्ठ[1] वा
न हि नाम तादृशमिदं प्रयोजनम् ।
असुरं निहत्य सहसैव तत्क्षणाद्
अहमानयामि तपनीयपङ्कजम् ॥ ३९ ॥

विजयी यदस्मि समरेषु जित्वराः
प्रभवन्ति तत्र तव पादपांसवः ।
अरुणो[2] यदन्धतमसं निषेधति
स्फुरितं नराधिप तदर्कतेजसाम् ॥ ४० ॥

नायकवाक्यम् ।

मसृणोक्तिपल्लवितनीतिविक्रम-
क्रमा[3]मित्युदीर्य विरते रमाङ्गदे ।
स सरस्वतीमुखररत्ननूपुर-
ध्वनिपेशलं नृपतिराददे वचः ॥ ४१ ॥

त्वदृते मुखात् सुख[4]निरस्तसंशय-
प्रसरेयमुल्लसति कस्य भारती ।
शशलक्ष्मणः परमखर्वशर्वरी-
तिमिरच्छिदुच्छ[5]लति कान्तिकन्दली ॥ ४२ ॥

तव वेद्मि पौरुषमहं त्वया विना
न वपुः[6]स्थितिं क्वचन कर्तुमुत्सहे ।

---

१. B. reads तिष्ठवान् and T. तिष्ठतां स for तिष्ठ वा न. २. K. reads अरुणो यथेऽन्ध° and T. अरुणोदयं ध° for अरुणो यदन्ध°. ३. T. reads °तम° for °क्रम°. ४. T. reads मुख° for सुख°. ५. T. reads [illegible] for [illegible] ६. B. and I. reads पुनः for वपुः°.

धनुषीव दीर्घगुणसङ्गते यतस्
त्वयि मे दृढप्रणयवासितं मनः ॥ ४३ ॥

गमने तदेहि सहितौ यतावहे
झटिति त्रिविष्टपरिपोः पुरीम्प्रति।
अपदे यदुद्यमकथाविरोधिनी
न हि सिद्धये भवति दीर्घसूत्रता ॥ ४४ ॥

शुकवाक्यम्।

इति पार्श्ववर्तिनमुदीर्य मौनवान्
अभवत् स मालवकुरङ्गलाञ्छनः।
त्वरयाऽवतीर्य स च रत्नपञ्जरात्
पुरतः शुकोऽस्य पुनरित्यभाषत ॥ ४५ ॥

शृणु शङ्खचूडशुचिवंशभूरहं
नृप रत्नचूड इति नागदारकः।
उदपादि कण्वमुनिशिष्यशापतः
शुकता ममेयमनिमीलितस्मृतिः ॥ ४६ ॥

प्रणयोक्तिभिर्मुनिरथ प्रसेदिवान्
इति मे स शापतिमिरावधिं व्यधात्।
वशिनां रुषो मतिषु नाऽऽसते चिरम्
जलविप्रुषश्च नृप सत्यसूचिषु ॥ ४७ ॥

---

१. I. reads °प्रणयि° for °प्रणव°. २. I. reads °पुरिं रिपोः for °रिपोः पुरीम्. ३. I. reads यमुद्यम° for यदुद्यम°. ४. B. reads विनीय, T. and I. निरीय for ऽवतीर्य. ५. B. reads °शुचिभूरहं for °शुचिवंशभूरहं omitting two letters; while T. °शुचिवंशभूरहं for the same. ६. I. reads °परि° for °मनि°. ७. I. reads °वि विधात् for °वधिं व्यधात्. ८. T. reads वशितां for वशिनां. ९. B. and T. read सत्य° for सत्व°.

त्वमफल्गु नेष्यसि शशिप्रभान्तिकं
नवसाहसाङ्कनृपतेर्यदा वचः ।
नियतं भविष्यति तदा कुमार ते
शुकरूपरूपपरिवर्तनोत्सवः ॥ ४८ ॥

तदनङ्गषष्ठशर सन्दिश स्वयं
शनकैः किमप्युरगबालिकाम्प्रति ।
हृदि यन्निधाय सहसैव याम्यहं
फणिनामनम्रमणितोरणां पुरीम् ॥ ४९ ॥

अयि मौनमेतदवनीन्द्र मुच्यतां
द्रुतमुच्यतां च किमियं मयि त्रपा ।
पृथगस्मि देव नाहि ते परिच्छदात्
उचितं न तन्मयि रहस्यगोपनम् ॥ ५० ॥

नायकवाक्यम् ।

इति वल्गु जल्पति शुकेऽथ विस्मयात्
अपि विस्मयं परमवाप पार्थिवः ।
अवदच्च पञ्जरमिवास्य कल्पयन्
दशनांशुभिः स्फटिकसूचिकोमलैः ॥ ५१ ॥

विपदं विलोक्य तव दुस्सहामिमाम्
अयि रत्नचूड मम दूयते मनः ।

---

१. I. reads नय तं for नियतं. २. T. and I. read °हस्त° for °षष्ठ°. ३. T. reads त्वया for त्रपा. ४. I. reads रहिते and T. माहिते both for नहि ते. ५. I. reads न तु for न तन्. ६. B. reads सततांशुभिः for दशनांशुभिः but in the margin appear reading दशनांशुभिः.

पतितं कुकूलदहने न कस्य वा
मृदुमालतीमुकुलमाल्यमाधये ॥ ५२ ॥

नायिकाम्प्रति सन्देशः ।

घटितं विधेरिदमजर्यमावयोर्
न रमाङ्गदान्मम सखेऽतिरिच्यसे ।
इदमार्य तत्त्वयि विमुक्तयन्त्रणो
ननु सन्दिशामि हरिणीदृशम्प्रति ॥ ५३ ॥

विरतेऽपि मेघतिमिरे नताङ्गि मे
न गतासि लोचनपथं यदा तदा ।
फणिलोकभूमिमतिदुर्गमामिमाम्
अविशं तवानुपदमेव सुन्दरि ॥ ५४ ॥

नगरीं त्वदात्तहृदयोऽपि भोगिनाम्
अहमागतो न मृगदीर्घलोचने ।
श्रुतयेन्दुसूतिसरितोऽन्यतो हृतः
सहसैव हेमशतपत्रवार्तया ॥ ५५ ॥

अतिपाटलाधरमवाञ्चितं ह्रिया
स्मितकान्तिमत् स्तिमितरत्नकुण्डलम् ।

---

१. T. reads °मारद्रे for °माधये. २. T. reads °मजय्य° for °मजर्य°. ३. I. omits न. ४. T. reads आर्य तत्त्वविनिमुक्तयन्त्रणः for आर्य तत्त्वयि विमुक्तयन्त्रणो. ५. I. and T. read शृणु for ननु. ६. B. substitutes च for न. ७. B. reads ह्यहं for ऽन्यतो. ८. B. reads हंसशतपत्रशान्तया for हेमशतपत्रवार्तया. ९. T. reads °मवाञ्छितं श्रिया स्मितकान्तमस्तिमित° for °मवाञ्चितं ह्रिया स्मितकान्तिमत् स्तिमित°. १०. B. reads in the margin °कङ्कणम् for °कुण्डलम्.

तदपाङ्गसङ्कुलित[1]लोचनोत्पलम्
फणिलोककौमुदि मुखं स्मरामि ते ॥ ५६ ॥

द्वितये द्वयेन सहसोज्झितस्तदा
शशिसूतिसिन्धुपुलिनोदरे शरः।
जगदेकविभ्रमभुवा भुवस्तले[2]
सुतनु त्वया मयि च पुष्पधन्वना ॥ ५७ ॥

धृतमूर्मिहस्तनिवहेन रेवया
ननु[3] फेनकान्ति करभोरु मे पतत्।
विषये दृशोरुपदशं[4] मनश्शिला-
लिखितैक[5]हंसमिथुनं तवांशुकम् ॥ ५८ ॥

मणिकान्तिलुप्ततिमिरे रसातले
भवतीमिहानुसरता तनूदरि।
अवलोकितान्यथ मया पदानि ते
सहसा सुवर्णसिकताङ्किते पथि ॥ ५९ ॥

सरले झटित्यु[6]दितकार्श्यदोर्लता-
गलितानि रत्नवलयानि ते मया।
कथमप्युदश्रुपृषतं पदे पदे
चकितेन चन्द्रमुखि वीक्षितानि[7] च ॥ ६० ॥

---

१. T. and I. read सङ्कुलितलोललोचनम् for सङ्कुलितलोचनोत्पलम्; while in the margin B. substitutes °सङ्कलित° for °सङ्कुलित.° २. T. reads भुवः स्थले for भुवस्तले. ३. B. reads नव° for ननु. ४. T. reads °दिशं for °दशं. ५. B. and K. read रचितैक° for लिखितैक°. ६. I. reads झगिति and T. हगिति for झटिति. ७. T. reads वीक्षितानि for वीक्षितानि and B. substitutes ते for च.

मनसा किमालिखति किं समाचर-
स्यधुना किमिन्दुवदना क्व वक्ति सा ।
इति मे ऽपदिश्य भवतीं प्रवृत्तया
हृदयं सशल्यमिव हन्त चिन्तया ॥ ६१ ॥

परितापवत्यविरलोच्छलत्प्रभा-
तुहिनच्छटाभिरसिताब्जलोचने ।
शरदिन्दुदीधितिकलापसुन्दरस्
तव हार एष हृदि सिञ्चतीव माम् ॥ ६२ ॥

कथय प्रिये निहितसान्द्रचन्दन-
द्रवशीतलोज्ज्वलकरा कुचद्वये ।
मम हारयष्टिरपि सा सखीव किं
मदनाभितापमपद्रूकरोति ते ॥ ६३ ॥

क्षणमप्यहो पतसि मे शुचिस्मिते
न समुत्सुकस्य तव विस्मृतेः पथि ।
झटिति प्रविश्य हृदये ममाऽत्र किं
लिखितासि पद्ममुखि पुष्पकेतुना ॥ ६४ ॥

---

१. B. reads मया° for किमा°. २. B. reads हृदये for हृदयं; while K. reads हृदये प्रविष्टमिव for हृदयं सशल्यमिव. ३. B. and I. read निमित° for निहित°. ४. B. and K. read मदनातिताप° for मदनाभिताप.° ५. T. mutilates one letter before करोति; while I. omits म and gives in the marginal correction. ६. T. reads तपसि for पतसि. ७. I. reads झगिति and T. ढगिति for झटिति. B. has lost the remaining portion of this stanza from the word झटिति to the end, and then the three cantoes, namely, 11, 12, 13 and then the 23 stanzas of the 14th and 21 letters of the first half of 24th stanza.

समुद्वहन्ती स्रवदञ्जनाश्रु-
धारोत्करश्यामितकङ्कणेन ।
करारविन्देन मुखेन्दुबिम्बम्
आपाण्डुरक्षामकपोलभित्ति ॥ ६५ ॥

नवे नवे पङ्कजिनीपलाश-
मृणालहारादिसनाथपार्श्वे ।
प्रवाललीलास्तरणे निषण्णा
सिंहासने मन्मथपार्थिवस्य ॥ ६६ ॥

बालप्रवालाङ्कुरपाटलस्य
लावण्यरत्नाकरकौस्तुभस्य ।
उदूष्मणा निःश्वसितेन कान्ति
कदर्थयन्ती दशनच्छदस्य ॥ ६७ ॥

अनल्पसङ्कल्पविकल्पजाल-
विलोडनैर्न स्वमपि स्मरन्ती ।
ससाध्वसेनाविरतं मया त्वम्
उत्प्रेक्ष्यसे पन्नगराजपुत्रि ॥ ६८ ॥

कलापकः ।

ब्रूमः कियन्नय कथञ्चन कालमल्पम्
अत्राब्जपत्रनयने नयने निमील्य ।
हेमाम्बुजं तरुणि तत्तरसा ऽपहृत्य
देवद्विषो ऽयमहमागत इत्यवेहि ॥ ६९ ॥

---

१. K. reads धारोत्पल° for धारोत्कर°. २. K. and T. read अपाण्डुर° for आपाण्डुर°. ३. T. adds च after °भित्ति. ४. K. reads अत्राब्जलोचनयुगे for अत्राब्जपत्रनयने; while T. omits two letters and reads अत्राब्जनयने. ५. K. and T. read °ऽयमव° for ऽयमह°.

भद्रैतद्व्रज रत्नचूडानिबिडप्रेमार्द्रमस्मद्वचस्
तस्यास्तत्र कुरङ्गशावकदृशः कर्णावतंसीकुरु ।
शापान्ते बत विस्मरिष्यसि यदि भ्रातस्तदेकं किम-
प्यादाय स्वयमेव तत्प्रतिवचः पार्श्वं ममाऽभ्येष्यसि ॥७०॥

इति नरपतेः स्वान्ते कृत्वा मनोमृगवागुरां
गिरमुदकमग्निस्त्रिंशाभे नभस्यशनैः शुकः ।
चिरविनिहितां दृष्टिं तस्मान्निवर्त्य तथोत्सुको
झटिति गमने देवोऽप्यासीत्स साहसलाञ्छनः ॥ ७१ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये रत्नचूडसम्प्रेषणो नाम दशमः सर्गः ॥ १० ॥



१. I. reads भवे for यदि; while K. omits these two letters. २. T. reads भ्रान्तः for भ्रातः. ३. K. and T. read नरपातः for नरपतेः. ४. T. reads °विरहितां for °विनिहितां. ५. I. reads झगिति and T. ठगिति for झटिति. ६. T. reads कालिदासस्य कृतौ साहसाङ्कचरिते रत्नचूडिससम्प्रेषणा नाम नवमः सर्गः and I. इति परिमलस्य नवसाहसाङ्कचरिते रत्नचूडसम्प्रेषणो दशमः सर्गः.

# अथैकादशः सर्गः ।

## शत्रुजयार्थं प्रस्थानम् ।

अथ बिभ्रत् सरागेण हृदयेन कृशोदरीम् ।
स प्रतस्थे महीनाथः करेण च धनुर्लताम् ॥ १ ॥

इन्द्रनीलप्रतोलीतः स निर्गच्छन्पतिः श्रियः ।
तत्कान्तिश्यामतां गत्वा क्षणं कृष्ण इवाबभौ ॥ २ ॥

आसन्नपद्मसरसा कुसुमानम्रशाखिना ।
स नर्मदोपदिष्टेन गन्तुं प्रववृते पथा ॥ ३ ॥

यान्तमेकान्तशिशिरास्समीरास्तं सिषेविरे ।
एला-लवङ्ग-कङ्कोल-जातीफलसुगन्धयः ॥ ४ ॥

चक्रुस्तस्यानिलस्पर्शक्कणत्काञ्चनपल्लवाः ।
मौक्तिकस्तबकस्मेरा विस्मयं रत्नवीरुधः ॥ ५ ॥

अमन्दमारुताक्षेपमुक्तमुक्ताफलच्छलात् ।
चैलह्वंशलता मूर्ध्नि तस्य लाजानिवाकिरन् ॥ ६ ॥

---

१. Tr. mutilates the following :—

अथ बिभ्रत्सरागेण हृदयेन कृशोदरीम् ।
स प्रतस्थे महीनाथः............... ॥ १ ॥.

२. T. reads नतिश्रयम् and I. पतिश्रियः for पतिःश्रियः; while Tr. has this line thus:—

इन्द्रनीलप्रतोली.......गच्छन्-प-प्रियः ।.

३. I. reads °श्यामितां for °श्यामतां. ४ Tr. mutilates two letters after कुसुमा and reads °शालिना for °शाखिना. ५. Tr. mutilates 4 letters after नर्मदो. ६. Tr. reads वायवः and T. विषेहिरे for समीराः and सिषेविरे respectively. ७. T. and Tr. read °तक्कोल° for °कङ्कोल°. ८. T. omits रत्नवीरुधः and K. reads वनवीरुधः for the same. ९. T. reads °च्छटाः for °च्छलात्. १०. I. and Tr. read जरत्° and T. चरत्° for चल्ह°. ११. T. reads °मवाकिरन् for °निवाकिरन्.

अगलन् कुसुमव्याजात्तस्मिन्नभ्यर्णगामिनि ।
पातालकल्पवृक्षाणामानन्दाश्रुलवा इव[1] ॥ ७ ॥

अरविन्दमुख[2]क्रोडक्रीडन्मुखरषट्पदा ।
अनामयमिवापृच्छत्तमभ्यागतमब्जिनी ॥ ८ ॥

शशिप्रभाक्षि[3]विस्तारसंवादिन्यः पदे पदे ।
तं किमप्यार्द्रतां निन्युररण्य[4]हरिणीदृशः ॥ ९ ॥

उपयुक्तामृतस्पर्धिनारिकेल[5]फलोदकान् ।
आस्वादित[6]लवङ्गैला-पूग-नागलतादलान् ॥ १० ॥

शय्यी[7]कृततनुस्वर्णकदलीबालपल्लवान् ।
विष्टरी[8]कृतविस्तीर्णचन्द्रकान्तशिलातलान् ॥ ११ ॥

तत्कालो[9]चितकर्तव्यव्यावृत्तैकरमाङ्गदान् ।
आवृत्ति[10]विहितप्रेयःफणिराजसुताकथान् ॥ १२ ॥

हृदयन्यस्त[11]कर्पूरमृणालनलिनी[12]दलान् ।
पुंस्कोकिलकुलो[13]ल्लापजनितस्मरसञ्ज्वरान् ॥ १३ ॥

---

१. K. reads तथा for इव. २. T. reads °मुखे for °मुख°; while K. reads °षट्पदाः for °षट्पदा, and अपृच्छन् and अब्जिन्यः in plural form for अपृच्छत् and अब्जिनी. ३. Tr. reads °प्रभोक्ति° for °प्रभाक्षि° and °सम्बन्धिन्यः for °संवादिन्यः. ४. Tr. reads °रास्य° for °रण्य° and after it mutilates 5 letters; while I. reads अरण्यै for अरण्य°. ५. T. reads °नारिकेलि°, Tr. नालिकेर° and I. °नालिकेरी° for °नारिकेल°. ६. Tr. omits this line:—

आस्वादितलवङ्गैला-पूग-नागलतादलान् ॥ १० ॥

and substitutes for this the latter half of the twelfth stanza. ७. T. reads शय्या° for शय्यी°. ८. T. reads विस्वरी° and K. विस्तरी° for विष्टरी°. ९. T. omits the following line:—

तत्कालोचितकर्तव्यव्यावृत्तैकरमाङ्गदान् ।.

१०. Tr. reads अव्यक्त° for आवृत्ति°. ११. Tr. omits this following stanza:—

हृदयन्यस्तकर्पूरमृणालनलिनीदलान् ।
पुंस्कोकिलकुलोल्लापजनितस्मरसञ्ज्वरान् ॥ १३ ॥.

१२. T. reads °कदली° for °नलिनी°. १३. I. reads °कलो° for °कुलो°.

जाम्बूनदलतागुल्मैर्विहिताश्रयसौहृदान् ।
गच्छन् स तत्र कतिचिन्निवासान्प्यधिताऽध्वनि ॥ १४ ॥

कुलकम् ।

वङ्कुमुन्याश्रमप्राप्तिः ।

सम्प्राप पृथिवीपालः कालेन कियताऽप्यथ ।
स कूलोपान्तविचरन्यङ्कु वङ्कुतपोवनम् ॥ १५ ॥

आश्रमवर्णनम् ।

हृतं कुतूहलेनाऽलं तदालोकनजन्मना ।
पतिं मध्यमलोकस्य तं जगाद रमाङ्गदः ॥ १६ ।

सीमा सतीतिशब्दस्य सकुशाङ्कुराल्पपल्लवा ।
मैथिलीव श्रियं धत्ते कामप्याश्रमभूरियम् ॥ १७ ॥

इतो वान्ति हविर्धूमलतालास्यप्रदा इमे
मरुतः पावनाः पक्वपुरोडाशसुगन्धयः ॥ १८ ॥

इतो हिरण्मयी भूमिस्तरवो हेमवल्कलाः ।
उन्निद्रहेमपद्मानि पयांसीव पदे पदे ॥ १९ ॥

---

१. T. mutilates three letters after °गुल्म°. २. Tr. mutilates three letters aftr, निवासान्. ३ T. does not insert this. ४. T. and I. read स प्राप for सम्प्राप. ५. I. सकुशोपान्तविचरन्यङ्कु and T. सकुशोपान्तविचरन्यङ्कु both for सकूलोपान्तविचरन्यङ्कु. ६. Tr. reads कौतूहलेनैवं and K. and T. कुतूहलेनाहं for कुतूहलेनाऽलं. ७. K. reads °मर्तास्य for °सतीति.° ८. K. reads सा कुशान्तोल° T. सकुशान्तोल° and I. reads सकुशाङ्कुरोल° all for सकुशाङ्कुराल्प°. ९. T. substitutes च for °व. १०. K. and T. read कुरुतः for मरुतः. ११ K. reads हेमपल्लवाः for हेमवल्कलाः.

काकपक्षाङ्कमूर्धानः पश्यैते गुरुशिक्षया।
बेटवः खण्डयन्त्यत्र समिधश्च पदानि च॥ २०॥

अनया सामे गायन्त्या स्वरसंशयवानयम्।
इतः करोति कलहं शुकः सारिकया समम्॥ २१॥

[5]इदमत्राद्भुतं पश्य मदक्लिन्नां गजस्य यत्।
गण्डलेखां नखाग्रेण शनैः कण्डूयते हरिः॥ २२॥

प्रभामण्डलपर्यस्ततमसः [6]शतशः पथि।
[7]तवापतन्ति पातालरवयोऽमी महर्षयः॥ २३॥

[9]एषां द्वितयमेताभिः कपिलाभिरलङ्कृतम्।
उटजप्राङ्गणं गोभिर्जटाभिरभितश्शिरः॥ २४॥

इतो गात्रपरावृत्ति[10]भैमास्थि परुषेतरान्।
मुनेः शय्याकुशान्नत्ति बालः कस्तूरिकामृगः॥ २५॥

इतो ऽप्ययमृषिः पश्य [11]जपापाटलया ऽनया।
गवाऽनुगम्यते सायं सन्ध्ययेव [12]दिवाकरः॥ २६॥

---

१. T. reads पटवः for बटवः; while Tr. reads खादयन्ति for खण्डयन्ति and पत्रा° for क्षा° and mutilates one letter after it. २. Tr. mutilates first four letters in this line and substitutes धु for म. ३. Tr. reads अहम् for अयम्. ४. I. and Tr. read सह for °समम्. ५. T. reads इदं शुभ्राद्भुतं for इदमत्राद्भुतं. ६. Tr. mutilates last five letters in this line, T. two letters after तमसः and reads °शो: पथि and I. किं कृशोः पथि for शतशः पथि. ७. Tr. mutilates first five letters in this line and T. reads तवापताल° for तवापतन्ति omitting next three letters; while K. reads तव प्रतापरवयो शोभतेऽमी for तवापतन्ति पातालरवयोऽमी. ८. Tr. reads हि महाहयः for ऽमी महर्षयः. ९. Tr. mutilates first two letters. १०. T. reads °भंङ्गाग्नि° and Tr. and I. °भंमाग्नि° for °भैमास्थि. ११. Tr. reads जटा° for जपा°. १२. Tr. substitutes निशाकरः for दिवाकरः.

सहसैवातिथिः प्राप्तः कोऽप्ययं भवतामिति।
एष प्रेत्युटजं वक्ति ससम्भ्रममयं शुकः॥ २७॥

अतः सम्प्रति वीक्षन्ते कौतुकोत्तानितेक्षणाः।
त्वामिन्दुमिव पर्याप्तमण्डलं मुनिकन्यकाः॥ २८॥

भूदत्तस्मरसाम्राज्यं मुखश्रीतर्जितेन्दु च।
आसामिन्दीवराक्षीणामलङ्कारो नवं वयः॥ २९॥

मुक्तास्त्रः स्त्रीषु कन्दर्पो देवात्रानुशयादिव।
शङ्के सन्त्यज्य कोदण्डमात्तदण्डस्तपस्यति॥ ३०॥

वङ्कुमुनिदर्शनम्।

तस्मिन्नित्युक्तवत्येव तथा सविधवर्त्मनि।
ततः पृथ्वीशशाङ्केन वङ्कुर्मुनिरदृश्यत॥ ३१॥

अंसावलम्बिनीर्बिभ्रत् सन्ध्याभ्रकपिशा जटाः।
प्रसृता इव निर्गत्य परमज्योतिषश्शिखाः॥ ३२॥

दधद्यज्ञोपवीतेन सीमन्तितमुरस्थलम्।
जाह्नवीनिर्झरेणेव नभः प्रालेयपाण्डुना॥ ३३॥

---

१. K. reads प्रस्फुटवाग्वक्ति for प्रत्युटजं वक्ति; while Tr. mutilates these six letters and the correction has inserted प्रस्फुटवान् वक्ति. २. Tr. reads पश्यन्ते for वीक्षन्ते and K. गृह्णन्ते for the same. ३. T. reads °क्षणात् for °क्षणाः. ४. T. reads °साम्राज्यमुख° for °साम्राज्यं मुख°. ५. Tr. mutilates one letter. ६. Tr. mutilates first three letters in this line and reads °न्यस्य for °न्त्यज्य. ७. K. reads तस्याः सविध° and T. तथा सर्वत्र both for तथा सविध°. ८. K. reads तत्र for ततः. ९. In I. after क two letters are, not clear enough to read. They may perhaps be one after शिखा, पिषा or पिधा. १०. T. reads शुचि for इव. ११. K. reads °स्तलम् for °स्थलम्.

शुद्धैकगुणसम्पृक्तामक्षमालां दधत् करे ।
मूर्तां तीव्रतपःसिद्धिमात्मनः फलितामिव ॥ ३४ ॥

योग-क्षेमोपपत्त्यर्थमुपविष्टः कुशासने ।
नप्तेव मैथिलीभर्तुरतिथिर्नाम पार्थिवः ॥ ३५ ॥

प्रियसोमः सदायुक्तः प्रियया चानसूयया ।
पात्रमत्रिरिवोग्राणां तपसां तेजसामिव ॥ ३६ ॥

स दृष्टिपथमायाति ययातिप्रतिमे नृपे ।
तुतोष कस्य वा न स्यादाकृतिस्तस्य सा मुदे ॥ ३७ ॥

ततः कृतप्रणामस्य तस्य प्रणतभूभृतः ।
विदधे स विशाम्पत्युरातिथ्यमतिथिप्रियः ॥ ३८ ॥

अथाऽदूरे सुखासीनः सुखासीने महीभृति ।
इति सूनृतया वाचा स वक्तुमुपचक्रमे ॥ ३९ ॥

अद्य नः पुण्यबीजेन मुक्तो यत् सत्यमङ्कुरः ।
ललाम लोकत्रितये येन त्वमवलोकितः ॥ ४० ॥

तव शंसति सौभाग्यमभिजातेयमाकृतिः ।
इन्दोः सुधानिधानत्वं ज्योत्स्नया यत् प्रतीयते ॥ ४१ ॥

---

१. K. reads गुरोः सुगुण°, T. गुरो-गुण° and I. मुक्त्वैकगुण° all for शुद्धैकगुण°. २. Tr. substitutes °मिव° for तीव्र°. ३. K. reads °क्त्यर्थ° for °पत्त्यर्थ°; while T. °स्थिः for °विष्टः. ४. T. reads अनुसूयया for अनसूयया. ५. I. and Tr. read वाकृती for तस्य सा; while T. substitutes वा for सा. ६. Tr. mutilates this half stanza :—

ततः कृतप्रणामस्य तस्य प्रणतभूभृतः ।.

७. T. reads प्रणम° for प्रणत°. ८. T. reads तथा ऽदूरसुखासीनः for अथाऽदूरेसुखासीनः. ९. I. reads सौजन्यम् for सौभाग्यम्.

यथा प्रदेशमायातैर्व्यक्ति[1] वज्राङ्कुशादिभिः।
चक्रवर्तीत्यनुक्तोऽपि चिह्नैस्त्वमनुमीयसे ॥ ४२ ॥

त्वद्दर्शनोत्सवेनैव[2] कृतार्थं चक्षुरद्य मः।
विमुञ्चति शरच्चन्द्रे चिररूढामपि[3] स्पृहाम् ॥ ४३ ॥

हेतु[4]द्वितयमेवात्र परमानन्दसम्पदः।
परब्रह्मोपलब्धिर्वा सङ्गतं वा भवादृशाम् ॥ ४४ ॥

अकृत्वा भवतः प्रश्नं न[5] स्थातुमहमुत्सहे।
धीरतां मम भिन्दन्ति यत् कौतुकरसोर्मयः ॥ ४५ ॥

त्वया महीभृतामत्र वंशः के[6]षामलङ्कृतः ?।
श्रोत्रपीयूषगण्डूषः[7] कानि नामाक्षराणि ते ? ॥ ४६ ॥

अनेन गुणिना सार्धं धनुषाऽनुचरेण च[8]।
केन कार्यातिभारेण त्वमेतामागतो भुवम् ? ॥ ४७ ॥

रमाङ्गदवाक्यम्।

इत्युक्त्वा विरते तस्मिन् राज्ञा सस्मितमीक्षितः।
स्थित्वा[9] क्षणमुवाचेदमिङ्गितज्ञो रमाङ्गदः ॥ ४८ ॥

अर्बुदाचलवर्णनम्।

ब्रह्माण्डमण्डपस्तम्भः श्रीमानस्त्यर्बुदो[10] गिरिः।
उपोढहंसिको[11] यस्य सरितः सालभञ्जिकाः ॥ ४९ ॥

---

१. T. reads मूर्ति for व्यक्ति and Tr. व्यक्त for the same. २. I. reads एतद् for एव. ३. K. reads चिररूढां मणिस्पृहाम् for चिररूढामपि स्पृहाम्. ४. I. reads हेतुर्द्वितय° for हेतुद्वितय°. ५. K. reads चिरं न स्थातुमुत्सहे for न स्थातुमहमुत्सहे. ६. Tr. reads कोऽय° for केषा° and gives in the correction कः स for the same. ७. Tr. reads °गण्डूषं for °गण्डूषः ; while K. reads °गण्डूषीकृत° for °गण्डूषः कानि. ८. K. substitutes ते for च. ९. K. and T. read स्मित्वा. for स्थित्वा. १०. T. reads °नः पर्वतो गिरिः for °नस्त्यर्बुदो गिरिः. ११. Tr. reads °हंसका and K. °हंसिनीः both for °हंसिकाः ; while T. °हंसकाः for the same.

यः सूर्यांशुशलाकस्य बिम्बस्योपरि तिष्ठतः ।
व्योमनीलातपत्रस्य दण्डत्वमधिरोहति ॥ ५० ॥

आदातुमवतंसाय[1] स्वर्णदीहेमपुष्करम्[2] ।
यः[3] सैन्द्रनीलकटको भुवो भुज इवोद्धृतः[4] ॥ ५१ ॥

शिखरासन्ननक्षत्रो लक्ष्यते यः प्रतिक्षपम् ।
सशीकर इवोदस्तो हस्तः पातालदन्तिनो[5] ॥ ५२ ॥

यस्य शृङ्गेन्द्रनीलांशुश्याममादित्यमण्डलम् ।
क्षणं पुटकिनीपत्रच्छत्राकृति[6] विलोक्यते ॥ ५३ ॥

नीलकण्ठप्रिया कामं कृतपञ्चाननस्थितिः ।
यस्याग्रभूमिर्गौरीव गुहापीतपयोधरा[7] ॥ ५४ ॥

अधः[8]सन्नद्धमेघेषु स्थिता[9] यस्याऽग्रसानुषु ।
प्रावृड्विलासलास्यानामनभिज्ञाः कलापिनः[10] ॥ ५५ ॥

इन्दुः कटकमाणिक्यं यस्य तुङ्गस्य भूभृतः ।
भुवो यस्य च कान्ताया मेखलामणिरंशुमान् ॥ ५६ ॥

क्वचित्क्वचित्प्रतन्त्यां[11] यः कृष्णसारः[12] शशित्विषा ।
कण्डूयत इवासन्नां शृङ्गेण हि[13] मृगीं निशि ॥ ५७ ॥

---

१. Tr. reads °मपरं सा for °मवतंसाय and mutilates one letter after it and substitutes मं for ण. २. T. reads °पुष्करः for °पुष्करम्. ३. T. reads यस्येन्द्र° for यः सैन्द्र°. ४. K. reads इवोच्छ्रितः for इवोद्धृतः; while Tr. reads भुवा for भुवो. ५. Tr. reads °दन्तिनः for °दन्तिनो. ६. K. reads कमलिनी° for पुटकिनी°. ७. Tr. reads गुहार्पित° for गुहापीत°. ८. T. reads अथ for अधः. ९. Tr. reads स्थिरा for स्थिता. १०. K. reads शिखण्डिनः for कलापिनः. ११. Tr. mutilates four letters after क्वचित्क्वचित्; while T. reads पतत्पायः for प्रतन्त्या यः. १२. T. reads कूटसारः for कृष्णसारः and I. कृष्णसारशशि-त्विषा for कृष्णसारः शशित्विषा. १३. I. reads सुसुग्धं निशि for हि मृगीं निशि; while Tr. mutilates one letter before मृगीं.

पाण्डुः शरद्घनैरूर्ध्वमधस्तालीवनासितैः ।
यः[2] कैलास इवाश्लिष्टः पौलस्त्यभुजसम्पदा ॥ ५८ ॥

हरयः शेरते यस्य मत्तेभवधनिस्सहाः[3] ।
गुहासु नखनिर्मुक्तमुक्तादन्तुरभूमिषु[4] ॥ ५९ ॥

अलकच्युतमन्दारमकरन्दसुगन्धिभिः ।
अमर्त्यमिथुनक्रीडा निकुञ्जैर्यस्य[5] सूच्यते ॥ ६० ॥

उदञ्चदिन्द्रचापानि[6] नानारत्नांशुपल्लवैः ।
सानूनि यस्य सेवन्ते द्वये चित्रशिखण्डिनः ॥ ६१ ॥

पत्या सह वनान्तेषु विहरन्त्याऽद्रिकन्यया ।
नीयन्ते शोणतां यस्य शिलास्सालक्तकैः पदैः ॥ ६२ ॥

प्रतिभान्ति पुरस्तेऽपि यस्य वल्मीकवामनाः ।
शैलास्सुवेल-कैलास-महेन्द्र-मलयादयः ॥ ६३ ॥

वसिष्ठाश्रमवृत्तवर्णनम् ।

अतिस्वाधीननीवार-फल-मूल-समित्-कुशाम् ।
मुनिस्तपोवनं चक्रे तत्रेक्ष्वाकुपुरोहितः ॥ ६४ ॥

हृता[7] तस्यैकदा धेनुः कामसूर्गाधिसूनुना ।
कार्तवीर्यार्जुनेनेव जमदग्नेरनीयत[8] ॥ ६५ ॥

---

१. Tr. mutilates one letter before तः. २. Tr. reads कैलास इव संसृष्टः for यः कैलास इवाश्लिष्टः. ३. K. reads °निस्पृहाः for °निस्सहाः. ४. I. omits one letter after गुहासु and reads स्वामिभुक्ति° for नखनिर्मु°; while Tr. reads नगरी for नखनि° and mutilates two letters after it. ५. Tr. reads यत्र for यस्य. ६. T. reads °चापवदि for °चापानि. ७. T. and I. read हृत्वा for हृता. ८. K. reads अतप्यत for अनीयत.

स्थूलाश्रुधारासन्तानस्नपितस्तनवल्कला ।[1]
[2]अमर्षपावकस्याभूद्भर्तुस्समिदरुन्धती ॥ ६६ ॥

अथाथर्वविदामाद्यस्समन्त्रामाहुतिं ददौ ।
विकसद्विकटज्वालाजटिले[3] जातवेदसि ॥ ६७ ॥

ततः क्षणात् सकोदण्डः किरीटी काञ्चनाङ्गदः ।
उज्जगामाग्नितः कोऽपि सहेमकवचः पुमान् ॥ ६८ ॥

दूरं सन्तमसेनेव विश्वामित्रेण सा[4] हृता ।
तेनानिन्ये मुनेर्धेनुर्दिनश्रीरिव[5] भानुना ॥ ६९ ॥

ततस्तापसकन्याभि[6]रानन्दाश्रुलवाङ्कितः ।
कपोलैः[7] पाणिपर्यङ्कात् साश्रुलेखादपास्यत ॥ ७० ॥

परमारवंशवर्णनम् ।

परमार इति प्रापत् स मुने[8]र्नाम चार्थवत्[9] ।
मीलितान्य[10]नृपच्छत्रमातपत्रं च भूतले ॥ ७१ ॥

प्रवर्तितातिविस्तीर्ण[11]सप्ततन्तुपरम्परः[12] ।
पुराणकूर्मशेषं यै[13]श्चकाराम्भोनिधेः पयः ॥ ७२ ॥

---

१. Tr. reads °स्तनवत्सला for °स्तनवल्कला. २. Tr. omits the following:—
अमर्षपावकस्याभूद्भर्तुः समिदरुन्धती ॥ ६६ ॥
अथाथर्वविशमाद्यः समन्त्रामाहुतिं दशौ ।
विकसद्विकटज्वालाजटिले जातवेशसि ॥ ६७ ॥
ततः क्षणात् सकोदण्डः किरीटी काञ्चनाङ्गदः ।
उज्जगामाग्नितः कोऽपि सहेमकवचः पुमान् ॥ ६८ ॥.
३. T. reads °जटाले for °जटिले. ४. K. reads या for सा ५. T. and Tr. read दिवः श्री° for दिनश्री°. ६. Tr. reads °दे सनन्दाश्रुलवा दशा for °भिरानन्दाश्रुलवाङ्कितः; while K. reads °लवाञ्चितः for °लवाङ्कितः. ७. I. omits ten letters after कपोल, but they appear in the marginal correction. ८. Tr. reads मुनि° for मुने°. ९. T. reads पार्थवत् for चार्थवत्. १०. Tr. reads [illegible]° for °मीलितान्य°; while T. and I. आधिपत्यं for आतपत्रं. ११. Tr. reads प्र[illegible]न्य° for प्रवर्तितातिं°; while T. substitutes °अभि° for °अति°. १२. T. reads °सप्तसप्त° for °सप्ततन्तु°. १३. Tr. reads यत् for यैः.

स्थापितैर्मणिपीठेषु मुक्ताप्रालम्बमालिभिः ।
भूरियं यज्वना येन हेमयूपैरपूर्यत ॥ ७३ ॥

प्रशान्तचिन्तासन्ताने चिरेण नमुचिद्विषि[1] ।
अमोच्यतास्तदैत्येन[2] येनेर्ष्याकलहं शची ॥ ७४ ॥

वंशः प्रववृते तस्मादादिराजान्मनोरिव ।
नीतः सुवृत्तैर्गुरुतां नृपैर्मुक्ताफलैरिव ॥ ७५ ॥

तस्मिन् पृथुप्रतापोऽपि निर्वापित[3]महीतलः ।
उपेन्द्र इति सञ्जज्ञे राजा सूर्येन्दुसन्निभः ॥ ७६ ॥

सदागतिप्रवृत्तेन सीतोच्छ्वसितहेतुना ।
हनूमतेव यशसा यस्याऽलङ्घ्यत सागरः ॥ ७७ ॥

शङ्कितेन्द्रेण दधता पूतामवभृथै[5]स्तनुम् ।
अकारि यज्वना येन हेमयूपाङ्किता मही ॥ ७८ ॥

अत्यच्छदशनोद्गच्छदंशुलेखातरङ्गिभिः ।
दीर्घैर्यस्यारिनारीणां निःश्वासैश्चामरायितम् ॥ ७९ ॥

तस्मिन् गते नरेन्द्रेषु तदन्येषु गतेषु च[6] ।
तत्र वाक्पतिराजाख्यः पार्थिवेन्दुरजायत ॥ ८० ॥

दीर्घेण चक्षुषा लक्ष्मीं भेजे कुवलयस्य यः ।
नारीणां दिशताऽऽनन्दं[7] दोष्णा सत्तारकेण च ॥ ८१ ॥

१. I. reads °रिवषि for °द्विषि. २. K. reads °दैन्येन for °दैत्येन. ३. Tr. mutilates last six letters of this line and then omits the latter half of this stanza and twenty-two complete stanzas and first eight letters of the first half of the ninety-eighth stanza. ४. I. omits three letters after निर्वापित° ५. T. reads अवभृतैः for अवभृथैः. ६. K. reads तदन्यगतिमन्ततः for तदन्येषु गतेषु च. ७. I. reads °नन्दशोष्णा for °नन्दं दोष्णा.

शिथिलीकृतजीवाशा यस्मिन् कोपोन्नतभ्रुवि।
निन्युश्शिरांसि स्तब्धानि न धनूंषि[1] नतिं नृपाः ॥ ८२ ॥

वैरिसिंह इति प्रापज्जन्म तस्माज्जनाधिपैः[2]।
कीर्तिभिर्यस्य कुन्देन्दुविशदाभिः[3] सटायितम् ॥ ८३ ॥

पौलोमीरमणस्येव यस्य चापे विलोकिते।
चकितैस्सरसीव क्ष्मा राजहंसैरमुच्यत ॥ ८४ ॥

श्रीसीयक[4] इति क्षेत्रं यशसामुदभूत्ततः।
दिलीपप्रतिमः पृथ्वीशुक्तिमुक्ताफलं नृपः ॥ ८५ ॥

लक्ष्मीरधोक्षजस्येव शशि[5]मौलेरिवाम्बिका।
वडजे[6]त्यभवद्देवी कलत्रं यस्य[7] भूरिव ॥ ८६ ॥

अखण्डमण्डलेनाप्य प्रजापुण्यै[8]र्महोदयम्।
कलिसन्तमसं येन व्यनीयत नृपेन्दुना ॥ ८७ ॥

वशीकृताक्षमालो यः क्षमामस्यायतां दधने[9]।
राज्याश्रममलञ्चक्रे राजर्षिः कुशचीवरः ॥ ८८ ॥

स्मितज्योत्स्नादरिद्रेण बाष्पलावि[10]मुखेन्दुना।
शशंसुर्विजयं यस्य रुद्रपाटी[11]पतिस्त्रियः ॥ ८९ ॥

---

१. I. reads धनूषि रातिं नृपाः for धनूंषि नातिं नृपाः. २. K. reads नराधिपः for जनाधिपः. ३. K. reads °विशदाः शरदायिताः, I. °विसदाभिः सटायुतम् and T: omits one letter and reads °विशदाः सदायिताम् for °विशदाभिः सटायितम्. ४. K. reads श्रीभावक and T. श्रीभीयक both for श्रीसीयक. ५. T. reads चन्द्र° for शशि°. ६. K. reads वरमे° for वडजे°. ७. T. reads यत्र for यस्य. ८. K. reads °पौण्यान् and I. °पुण्यान् both for °पुण्यैर्. ९. T. reads दधात् for दधन्. १०. T. reads बाष्पपीन° and I. बाष्पाढ्येन for बाष्पलावि°. ११. I. am unable to find out proper name here. T. reads रुद्रपाटी° and I. न(र)द्रुपाटी° for रुद्रपाटी°; while T. substitutes °प्रतं° for °पति°.

अकङ्कणमकेयूरमनूपुरममेखलम्।
हूणावरोधवैधव्यदीक्षादानं व्यधत्त यः॥ ९०॥

नायकवर्णनम्।

अयं नेत्रोत्सवस्तस्मात् जज्ञे देवः पितृप्रियः।
जगत्तमोपहो नेत्रादत्रेरिव निशाकरः॥ ९१॥

श्रीमद्वाक्पतिराजोऽभूदग्रजोऽस्याग्रणीस्सताम्।
सगरापत्यदत्ताब्धिपरिखायाः पतिर्भुवः॥ ९२॥

अतीते विक्रमादित्ये गतेऽस्तं सातवाहने।
कविमित्रे विशश्राम यस्मिन् देवी सरस्वती॥ ९३॥

चक्रिरे वेधसा नूनं निर्व्याजौदार्यशालिनः।
ते चिन्तामणयो यस्य निर्माणे परमाणवः॥ ९४॥

यशोभिरिन्दुशुचिभिर्यस्याच्छतरवारिजैः।
अपूर्यतेयं ब्रह्माण्डशुक्तिर्मुक्ताफलैरिव॥ ९५॥

श्रियं नीलाब्जकान्त्या यः प्रणयिभ्यो ददौ दृशा।
अरातिभ्यश्च सहसा जह्रे निस्त्रिंशलेखया॥ ९६॥

अंसस्रस्तवल्कलग्रन्थिः सजटापल्लवं शिरः।
चक्रे येनाहितस्त्रीणामक्षसूत्राङ्कितः करः॥ ९७॥

१. T. reads भूणेऽव° for हूणाव°. २. T. reads देवपातिः and I. देवपितृ° for देवः पितृ°. ३. I. reads श्रीमदुत्पलभवो° for श्रीमद्वाक्पतिराजो°. ४. I. reads अग्रजे स्याग्रमणी for अग्रजोऽस्याग्रणीः and T. °स्याग्रणीः सताम् for °स्याग्रणीस्सताम्. ५. T. reads विजया° for विक्रमा° and K. विजयापत्ये for विक्रमादित्ये. ६. K. reads निर्माण° for निर्माणे. ७. T. reads °जपापल्लवं for °जटापल्लवं.

पुरं कालक्रमात्तेन प्रस्थितेनाम्बिकापतेः।
मौर्वीकिणाङ्कवत्यस्य पृथ्वी दोष्णि निवेशिता ॥ ९८ ॥

प्रशास्ति परितो विश्वमुज्जयिन्यां पुरि स्थितः।
अयं ययाति-मान्धातृ-दुष्यन्त-भरतोपमः ॥ ९९ ॥

अनेनास्तः कपोलेषु पाण्डिमा रिपुयोषिताम्।
समाहृत्येव तद्भर्तृयशसो बाहुशालिना ॥ १०० ॥

सदा समकरस्यास्य लक्ष्मीकुलगृहस्य च।
सिन्धुराज इति व्यक्तं नाम दुग्धोदधेरिव ॥ १०१ ॥

अनेन विहितान्यत्र यत् साहसशतान्यतः।
नवीनसाहसाङ्कोऽयं वीरगोष्ठीषु गीयते ॥ १०२ ॥

विन्ध्यान्तश्चरताऽनेन मृगयासक्तचेतसा।
कन्याशशिप्रभा नाम नागसूतिरदृश्यत ॥ १०३ ॥

अदृश्यैरथ सा नागैरस्य पार्श्वादनीयत।
तामन्वेष्टुं प्रविष्टेन कुतूहलबलादिह ॥ १०४ ॥

समणिस्तम्भमग्रेऽथ दृष्टं धाम हिरण्मयम्।
तत्र मूर्ता ततस्सिन्धुरिन्दुमूर्तिर्विलोकिता ॥ १०५ ॥

---

१. Tr. reads °व्रणकिणाङ्कस्य for °किणाङ्कवत्यस्य. २. I. reads °मुज्जयन्यां for °मुज्जयिन्यां. ३. Tr. and T. read तद्भर्तुर् for तद्भर्तृ°; while T. reads °यशसां for °यशसो and Tr. °शालिनः for °शालिना. ४. T. reads विक्रमार्क for सिन्धुराज. ५. Tr. reads वितताानि for विहितानि. ६. Tr. reads विन्ध्यान्तविचराता तेन for विन्ध्यान्तश्चरताऽनेन. ७. In Tr. there appears a space of mutilated one line after this line and by the contest we agree with it, but in T. and I. there is no any proof for it. ८. T. and I. read प्रविष्टोऽयं कुतूहलवशात् for प्रविष्टेन कुतूहलबलात्.

अकृताऽऽतिथ्यमेतस्य भक्तिनम्रस्य सा ततः ।
नीता पृष्टेन चैतेन स्ववार्तायामभिज्ञताम् ॥ १०६ ॥

ततोऽवज्राङ्कुशोद्यानहेमाब्जाहृतिसाहसम् ।
हेतुश्शशिप्रभावाप्तेर्विवृत्यावेदितस्तया ॥ १०७ ॥

असूचयत् प्रसङ्गेन त्रिविष्टपरिपोरथ ।
उदग्रमसुरेन्द्रस्य वीर्यं वज्राङ्कुशस्य सा ॥ १०८ ॥

ततस्तम्प्रत्यमर्षोऽस्य झटित्यङ्कुरितो हृदि ।
अन्यत्र वीरवृत्तेर्यदयमेकान्तमत्सरी ॥ १०९ ॥

पन्थाः पुरोऽसुरस्याऽथ प्राञ्जलेश्शंसितस्तया ।
असूच्यताग्रतश्चैतदमोघं दर्शनं तव ॥ ११० ॥

अथेदं रत्नवलयं दत्वास्मै सममाशिषा ।
कान्ता तिरोहिता सा च पुरुकुत्सस्य भूपतेः ॥ १११ ॥

अथैतेन गृहीतेयं यात्रावज्राङ्कुशम्प्रति ।
एषा च सुकृतैर्दृष्टा पादपद्मद्वयी तव ॥ ११२ ॥

वङ्कुमुनिवाक्यम् ।

इत्युक्त्वा सूक्तिचतुरो विरराम रमाङ्गदः ।
आददे मुनिरप्युद्यदन्तांशुशबलं वचः ॥ ११३ ॥

---

१. T. reads स्वसातायामभिज्ञता for स्ववार्तायामभिज्ञताम्. २. Tr. omits the following :—

असूचयत् प्रसङ्गेन त्रिविष्टपरिपोरथ ।
उदग्रमसुरेन्द्रस्य वीर्यं वज्रांकुशस्य सा ॥ १०८ ॥
ततस्तंप्रत्यमर्षोऽस्य झटित्यङ्कुरितो हृदि ।
अन्यत्र वीरवृत्तेर्यदयमेकान्तमत्सरी ॥ १०९ ॥
पन्थाः पुरोऽसुरस्याथ प्राञ्जलेः शंसितस्तया ।

३. K. reads ऽभवत् for हृदि. ४. K. and T. read वीर्य° for वीर°. ५. I. reads ऽथ for च. ६. K. reads °धवलं for °शबलं.

अहो पुराणराजर्षिसन्तानकथयैतया ।
पुण्यया हृतमात्मानमधुना मन्महे वयम् ॥ ११४ ॥

अवश्यंभाविनी तत्र सिद्धिः साहसिकस्य ते ।
शल्यं त्रिविष्टपस्यास्य हृदयादुद्धरिष्यसि ॥ ११५ ॥

एष वज्राङ्कुशस्याऽऽजौ नाऽकृत्वाऽन्तं निर्वर्तिता ।
भुजो भुवनभर्तुस्ते दिङ्नागकरपीवरः ॥ ११६ ॥

वधूस्तवाचिरेणाऽत्र भविष्यति शशिप्रभा ।
यथा कुवलयाश्वस्य दिवःकन्या मदालसा ॥ ११७ ॥

स्थिरो भव मितं कालं स्थित्वाऽस्मिन् नस्तपोवने ।
त्वया विनीयतामेष दीर्घाध्वजनितः श्रमः ॥ ११८ ॥

सिन्धुराजवाक्यम् ।

इत्युक्ते मुनिना सोऽथ राजेन्दुरिदमब्रवीत् ।
आज्ञा विलङ्घ्यते तात तव केन जगद्गुरोः ॥ ११९ ॥

अथ क्रमोन्मीलितसौहृदासु
कथास्वनेकासु मिथःकृतासु ।
विश्रम्यतामित्यवदन्महर्षिः
पतिं पृथिव्याः प्रथितप्रभावः ॥ १२० ॥

देवस्ततः स मुनिकल्पितमिन्द्रनील-
पर्यङ्कवत् कनकवेदिसनाथमध्यम् ।

---

१. T., I. and Tr. read पूतम् for हृतम्. २. T. and I. read निवर्तते. for निवर्तिता ; while T. reads °स्याऽतो for °स्याऽऽजौ. ३. T. reads भवो for भुजो. ४. T., Tr. and I. read फणि° for दिवः°. ५. Tr. reads स्थितो भुवि तं कालं, wanting one letter before तं. ६. Tr. reads ऽपि नीयताम् for विनीयताम्. ७. T. and Tr. read राजेन्दुर्मुनि° for राजेन्दुरिद°. ८. T. omits one letter after मु; while K. reads मुकुलीकृत° for मुनिकल्पित°.

अध्यास्त रत्नसदनं परितो वितान-
व्यालम्बिमौक्तिकलतं नवसाहसाङ्कः॥ १२१ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये वङ्कुमहर्षिदर्शनं नाम एकादशः सर्गः ॥ ११ ॥

१. Tr. reads इति परिमलस्य कृतौ नवसाहसाङ्कचरिते वङ्कुमुनिदर्शनो नाम एकादशः सर्गः, T. इति परिमलापरनाम्नि महाकाव्ये कालिदासस्य कृतौ साहसाङ्कचरिते वङ्कुमहर्षिदर्शनं नाम एकादशः सर्गः and I. इति परिमलस्य नवसाहसाङ्कचरिते वङ्कुमहर्षिदर्शनो एकादशः सर्गः

# अथ द्वादशः सर्गः ।

अथ मानवमीनलक्ष्मणो
मणिपर्यङ्कगतस्य तस्य सा ।
अपतत्फणिराजकन्यका
जगदेकाभरणं स्मृतेः पथि ॥ १ ॥

[1]व्यधित प्रणयं दृशां पुरः
कमनीयेषु स येषु वस्तुषु ।
जनितोत्कलिकाशतैः स तैर्
अरतेरायतनं व्यधीयत ॥ २ ॥

मुहुरङ्गलताविवर्तनैश्
श्वसितैः शून्यविलोकनेन च ।
क्षितिभर्तुरुपान्तवर्तिना
[2]मदनाकल्पक[3]मन्वमीयत ॥ ३ ॥

कदलीदलदत्तमारुतो
[4]हृदयन्यस्तमृणालकन्दलः ।
अथ तस्य बभूव यत्नवान्
उपचारे शिशिरे रमाङ्गदः ॥ ४ ॥

---

१. T. reads व्यधितः प्रणयन्निशां for व्यधित प्रणयं दृशां. २. T. mutilates three letters after °वर्तिना. ३. T. reads °मष्टमायत for मन्वमीयत. ४. K. reads हृदये न्यस्त° for हृदयन्यस्त°.

अभवद्द्वयमेव भूपतेस्
स्मरतप्तस्य मनोविनोदनम् ।
सुदृशस्स कराततिथिः शरः
स[1] च हारः स्तनचन्दनाङ्कितः ॥ ५ ॥

मदनान्तरितोऽपि[2] लङ्घितः
पथि जातेन परिश्रमेण सः ।
स्तिमितः क्षणमास्त[3] कौमुदी-
विशदक्षौमं[4]तिरोहिताननः ॥ ६ ॥

अथ पार्श्वचरेण सादरम्
मृदुसंवाहितपादपल्लवः ।
स कुरङ्गदृशेव निद्रया
चतुरं लोचनयोरचुम्ब्यत ॥ ७ ॥

स्वपुरोपवने समुत्सुकः
सुमुखीं स्वप्नपथेन[5] पार्थिवः ।
अवतंसितहेमपङ्कजाम्
अथ तामङ्कगतां व्यलोकयत् ॥ ८ ॥

अभि[6]कान्तमपाङ्गपातिना
जितनीलाब्जदलेन चक्षुषा ।
दधतीमपवर्तितं ह्रिया
मुखमापाण्डुकपोलमण्डलम् ॥ ९ ॥

१. T. reads स बभार for स च हारः. २. T. reads °विलङ्घितः for °ऽपि लङ्घितः. ३. T. अस्त° for आस्त. ४. I. reads °क्षोम° and K. reads °क्षाम° for °क्षौम°. ५. T. reads °पथेन for °पथेन. ६. I. reads अपि for अभि°.

शरदिन्दुमरीचिनिर्मलं
विगलद्वेपथुना स्तनांशुकम् ।
मुहुराक्षिपतीमलक्षितं
श्लथमुक्तावलयेन पाणिना ॥ १० ॥

नवपल्लवकान्तिना किम-
प्यचिरावासितपुष्पकेतुना ।
ललितामधरेण बिभ्रतीं
मुखचन्द्रांशुसटां स्मितच्छटाम् ॥ ११ ॥

जगदेकविलोकनोत्सवे
वपुषि स्वेदकणैरलङ्कृताम् ।
उदितामिव मन्दराहतात्
उदधेर्लग्नसुधालवां श्रियम् ॥ १२ ॥

वलिताहितनिःसहाङ्गुलि-
स्वकराश्लेषविशेषकम्पिनि ।
पुलकिन्यधिकं विमुञ्चतीं
चकितं वामकुचे विलोचने ॥ १३ ॥

अतिभासुररत्नकुण्डलाम्
अतिकान्तायतहारमण्डलाम् ।
जघनश्लथहेममेखलाम्
असमेषोराधिदेवतामिव ॥ १४ ॥

कुलकम् ।

---

१. T. reads °वेपथुनांशुकं सदा for °वेपथुना स्तनांशुकम्. २. K. reads °समां स्मितत्विषा for °सटां स्मितच्छटाम्. ३. I. reads °निलोचनो° for °विलोकनो°. ४. T. reads °लवा for °लवां. ५. T. reads पलिता° for वलिता°. ६. K. and T. read अविलोचने for विलोचने. ७. Except Tr. others do not insert कुलकम्.

नायकोक्तिः ।

अथ सस्मितमात्तवेपथुः
पतितो मन्मथपत्रिणां पथि ।
इति तां प्रणयार्द्रया गिरा
स किलाम्भोजमुखीमवोचत ॥ १५ ॥

वलितं न विभाति पृष्ठतः
कबरीकान्तमिदं तवाननम् ।
अयि नीलपयोदलेखया
स परिष्वङ्गमिवेन्दुमण्डलम् ॥ १६ ॥

इदमङ्गदवर्तिना करे
मणिना रुद्धमिवेरितं ह्रिया ।
न समर्थमितोपवर्तितुं
वदनं ते ललिताङ्गि का गतिः ॥ १७ ॥

इदमर्धविलोकिताधरं
मधुरापाङ्गतरङ्गितेक्षणम् ।
श्रियमातनुते सितासितं
सुतनु त्र्यश्रुविलोकितं तव ॥ १८ ॥

मिलितस्तव गण्डलेखया

---

१. T. reads °पत्त्रिण: for °पत्रिणां. २. I. reads वलितं मेऽत्र भाति or वलितमत्रभाति and T. वलितं न न भाति for वलितं न विभाति. ३. I. reads °मिवो° for °मितो°; while T. mutilates one letter after न and reads as सक्तमिवापवर्तितुं. ४. K. reads °विलोडिताधरं for °विलोकिताधरं. ५. T. mutilates one letter after सितासितं सु and reads thus :— सु ‒ तत्र्यश्रु°. Tr. सुरतासार° for सुतनु त्र्यश्रु°; while I.'s reading is somewhat illegible, but it may follow our reading.

सुदति स्वेदलवार्द्रपत्त्रया ।
किमपि स्पृहणीय एष मे
मरुदासन्नदिनान्तशीतलः ॥ १९ ॥

अयमुत्पलपत्त्रलोचने
तव बिम्बाधरपाटलच्छविः ।
अवलोकय कर्तुमीहते
पदमस्ताचलचूलके रविः ॥ २० ॥

दुरितघ्नमिदं सुदर्शनं
दधता बिम्बमनूरुसारथेः ।
स्मरलक्ष्मि विहायसाऽमुना
तव कृष्णेन हृते विलोचने ॥ २१ ॥

अरविन्दकरेण लोहितं
कमलिन्या धृतमातपांशुकम् ।
इदमुष्णकरेण कृष्यते
वलितेनापरदिग्वधूम्प्रति ॥ २२ ॥

करुणार्पितलोचनं मिथः
क्रमविश्लेषगलद्विसाङ्कुरम् ।
इदमार्द्रयतीव मे मनो
मिथुनं मानिनि चक्रवाकयोः ॥ २३ ॥

अवलोकय भीरु सम्प्रति

---

१. T. and I. read °अलार्द्र° for °लवार्द्र°. २. K. reads दुरितं किमिदं for दुरितघ्नमिदं; while T. omits one letter after दुरित°. ३. T. omits one letter after कम°. ४. Tr. reads चलितेन for वलितेन.

त्रितयेन [1]त्रितयं वियुज्यते ।
द्युमणिः प्रभया, श्रियाऽम्बुजं
प्रियया साश्रु[2]रयं विहङ्गमः ॥ २४ ॥

इदमम्बरपल्वलोदराद्-
अतिताम्रद्युति कालदन्तिना ।
रविवारि[3]रुहं निरस्यते
कनकस्निग्धमयूखकेसरम्[4] ॥ २५ ॥

परिचुम्बति वारुणीं दिशं
पुरतो राग[5]हृते विवस्वति ।
दिगियं शतमन्युलाञ्छिता
[6]भवति श्यामसुखी मितोदरि ॥ २६ ॥

इह भान्त्यतिलोहितातप-
स्तबकाः पश्य वनान्तभूमयः ।
तपनानुगमोत्सवाङ्किताः
दिनलक्ष्म्येव पदैस्सयावकैः ॥ २७ ॥

मदिराक्षि पुरोऽवलोक्यताम्
अपरस्यामयमानतो दिशि ।
स्तिमितामवगाहते ग[7]तिं
गुरुगोत्रस्ख[8]लिताकुलो रविः ॥ २८ ॥

अमुना शतपत्रबन्धुना
सहसा सुन्दरि यद्यदुज्झितम् ।

---

१. T. omits one letter before त्रितयं. २. T. mutilates one letter after साश्रु° and reads °या विहङ्गमः. ३. K. reads रविवारिरुहा and T. रविवारिहा omitting one letter before हा. ४. T. substitutes °केसरः for °केसरम्. ५. T. and Tr. read °भृते for °हृते. ६. T. reads भवमः for भवति. ७. K. and T. read मतिं for गतिं. ८. K. substitutes °स्खलितो यतो for °स्खलिताकुलो.

समममद्रिगुहामुखस्थितैस्
तिमिरैस्तत्त्वदितः[1]कटाक्षितम् ॥ २९ ॥

विरमत्त्ययि[2] पल्लवाधरे
सुरवीथीपथिको विरोचनः ।
अयमस्तगिरेर्निषीदति
स्वकरामृष्टशिलातले तले[3] ॥ ३० ॥

इयमश्रुतरङ्गितां दृशं
द्वितये चक्रवधूर्विमुञ्चति ।
नवकुङ्कुमलोहिते रवौ
दयिते चान्द्र[4]वियोगविक्लवे ॥ ३१ ॥

चलितोऽसि वद क्व मां विना
विरहं सोढुमहं न ते क्षमा ।
कृतपङ्कजकुड्मलाञ्जलिर्
नलिनी कान्तमितीव याचते ॥ ३२ ॥

अनुपुञ्जितपिङ्गदीधिति-
द्रुतलाक्षारुणदर्पणोपमम् ।
परतो[5]ऽस्तगिरेरिदं गल-
त्यनवद्याङ्गि पतङ्गमण्डलम् ॥ ३३ ॥

सरले सह वारिजश्रिया
निभृतं क्वापि गतः स[6] भास्करः ।

---

१. K. reads स्वकायितम् for कटाक्षितम्. २. K. T. and I. read °त्ययि ...इव वासरे for °त्ययि पल्लवाधरे. ३. Tr. reads स्फटिकामृष्टशिलासतले तटे, K. ...स्वकराकृष्टशिलातले तले both for स्वकरामृष्टशिलातले तले. ४. K. reads रात्रि° ...and gives in marginal reading च स्व°; while Tr. चार्द्र° for चान्द्र°. ५. Tr. ...reads परितो for परतो. ६. K. reads गतो नु for गतः स.

वद[1] तेन विनाऽब्जिनी कथं
क्षणदामद्य नताङ्गि नेष्यति ॥ ३४ ॥

स्फुटविद्रुमराजिनैकतः
सदृशं जातमुदञ्चता[2] नभः ।
सुदति त्वदपाङ्गपाटले
पटु[3] सान्ध्ये महसि प्रसर्पति ॥ ३५ ॥

परिपिञ्जरिताऽसिताम्बरैर्
निबिडैः कं न हरन्ति हारिभिः ।
अयि सायमिमाः[4] पयोधरैर्
धृतसन्ध्यातपकुङ्कुमैर्दिशः ॥ ३६ ॥

क्षणदाभिमुखेन खण्डिता
ननु सन्ध्या तमसा मनस्विनी ।
कुपितेव[5] निवर्तते जवात्
अतिवाचालविहङ्गनूपुरम् ॥ ३७ ॥

तव चण्डि विडम्बयत्यदस्
तनुसन्ध्यातपलिप्तमम्बुजम् ।
मणिकुण्डलकान्तिसङ्करात्
इदमाताम्रकपोलमाननम्[6] ॥ ३८ ॥

उदितानि तमांसि सा च ते
दयिता दैन्यमुपैति[7] पद्मिनी ।

---

१. K. reads अयि for वद. २. Tr. and I. read °मुदन्वता for °मुदञ्चता. ३. Tr. reads पर° for पटु. ४. T. reads इमान् for इमाः. ५. T. substitutes च for °व. ६. T. reads °कपोलितानननम् for °कपोलमाननम्. ७. K. and T. read उदेति for उपैति.

दिनभर्तुरितीव शंसितुं
सहसा सुन्दरि सन्ध्यया गतम् ॥ ३९ ॥

निहितं[1] बलिदीपकेषु तत्
तपनेनाऽऽशु[2] महः कृशोदरि ।
स्वशरस्फुरितं[3] मनोभुवा
तव सव्रीडविलोकितेष्विव ॥ ४० ॥

अतसीकुसुमोपमं मुखे
तदनु त्वत्कुचचूचुक[4]द्युति ।
अथ बालतमालमांसलम्
प्रसृतं सम्प्रति सर्वतस्तमः ॥ ४१ ॥

तरुकोटरमूकशारिकं[5]
निजनीडाङ्कनिलीनकोकिलम् ।
करभोरु सनिद्र[6]बर्हिणम्
प्रमदोद्यानमिदं निमीलति ॥ ४२ ॥

प्रसृतैर्गिरिकन्दरोदरात्[7]
इदमिन्दीवरदामकान्तिभिः ।
अधुना तिमिरैर्विगाह्यते[8]
भुवनं[9] पद्मसरश्च दन्तिभिः ॥ ४३ ॥

तिमिराञ्जनभक्तिशोभिना
धवलेनायतपक्ष्मपङ्क्तिना ।

---

१. I. and T. read निर्मितं for निहितं. २. I. and T. °नांशु° for °नाऽऽशु°. ३. T. reads °स्फुटितं for °स्फुरितं. ४. Except K. all read °मेचक° for °चूचुक°. ५. Some read °शारिकं and some °सारिकं Both are correct forms. ६. K. reads विनिद्र° and T. न निद्र° both for सनिद्र°. ७. T. reads °दरां for °दरात् ८. K. reads विभाव्यते for विगाह्यते. ९. T. substitutes भवनं for भुवनं.

अमुना भवतीव चक्षुषा
कुमुदेनैति रुचं कुमुद्वती ॥ ४४ ॥

उदरस्थितयोः कुतूहलात्
अलिनोः श्रोतुमिवास्फुटं वचः ।
कमलस्य निलीय निश्चलं
दलसन्धिष्वैवतिष्ठते तमः ॥ ४५ ॥

तरले सितिसितासितद्युतौ
इह दोलायितमीक्षणद्वये ।
लिखितागरुपत्रलेखयोस्
तिमिरं मूर्च्छति ते कपोलयोः ॥ ४६ ॥

उडुभिः खमितस्ततः क्षणात्
उदितैर्भङ्गुरकेशि भात्यदः ।
अतिगाढदिनोष्णजन्मभिः
परितः स्वेदलवैरिवाङ्कितम् ॥ ४७ ॥

शबलं शशलाञ्छनत्विषा
सतमः पश्य महेन्द्रदिङ्मुखम् ।
अचलेन्द्रसुतास्मितच्छवि-
च्छुरितं कण्ठमुमापतेरिव ॥ ४८ ॥

अहिराजसुते विलोक्यताम्
इयमिन्दोः प्रथमोद्गता कला ।

---

१. T. reads कुचं for रुचं. २. K. reads उपरि and T. उरसि for उदर°. ३. T. reads °ष्विव तिष्ठते मनः for °ष्ववतिष्ठते तमः ; while K. substitutes दृश्यते for तिष्ठते. ४. Tr. and I. read °गुरु° for °गरु°.

अयि भाति ययेन्द्रदिङ्मुखे
प्रमदेवार्द्रनखाङ्करेखया ॥ ४९ ॥

यदि कौतुकमायतेक्षणे
न चिरादेव सुधार्द्रयाऽनया ।
अरविन्ददलच्युतौ करे
मृदु लीलावलयं करोमि ते ॥ ५० ॥

अनवद्यमितः पुरः स्थितं
विदितं किं शशिना तवाननम् ।
नभसः सहसाङ्कमेष येत्
न कलङ्कत्रपयाधिरोहति ॥ ५१ ॥

इदमुद्गतमिन्दुमण्डलं
दिगियं पश्य बिभर्ति लक्ष्मवत् ।
त्वमिवाच्छकपोलमण्डल-
स्फुटकालागरुपत्रमाननम् ॥ ५२ ॥

विगलत्तिमिरांशुके शनैस्
स्पृशति व्यक्तिमधीरतारके ।
इह पश्य निशावधूमुखे
स्फुरति श्वेतमरीचिकुण्डलम् ॥ ५३ ॥

अयमुल्लिखति ध्रुवं करैर्
विधुरिन्दीवरलोचने तमः ।

---

१. T. reads यः सकलङ्कत्रपयाधिरोप्यति for यत् न कलङ्कत्रपयाधिरोहति.
२. T. mutilates three letters after °कपोल; while Tr. reads °मण्डलं for °मण्डल°. ३. T. reads शकैस् for शनैस्. ४. Tr. reads °मण्डलम् for °कुण्डलम्.
५. Tr. reads नहः for तमः; while T. reads °लोचनः for °लोचने.

कुमुदेषु तथाहि दृश्यतां[1]
निपतन्त्यस्य लवा इवालयः ॥ ५४ ॥

इदमञ्जननीलमाहतम्
पिहिताशं तुहिनांशुना करैः ।
अचलेन्द्रगुहासु लीयते[2]
शनकैः संकुचितं पुनस्तमः ॥ ५५ ॥

मसृणोल्लसदंशुमण्डल-
च्छलतः पश्य दिवःकृतेऽनया ।
इयमिन्दुसमुद्गकादितो
निशया हारलतेव कृष्यते ॥ ५६ ॥

यदभूत्तमसा जगत्तथा[3]
पिहितं पुष्करपत्रलोचने ।
तदिदं परतः[4] प्रकाशितं
शशिना कुङ्कुमकन्दपाण्डुना ॥ ५७ ॥

प्रसृतेव विलोचनोदरे
तिलके संकुचितेव[5] चान्दने ।

---

१. K., Tr. and T. do not insert the following lines:—
कुमुदेषु तथाहि दृश्यतां
निपतन्त्यस्य लवा इवालयः ॥ ५४ ॥
इदमञ्जननीलमाहतम्
पिहिताशं तुहिनांशुना करैः ।.

२. K. and T. omit the following lines:—
अचलेन्द्रगुहासु लीयते
शनकैः संकुचितं पुनस्तमः ॥ ५५ ॥.

३. T. reads जयः for जगत् and K. तमसां for तमसा; while Tr. तदा for तथा

४. T. and Tr. read परितः for परतः. ५. K. reads सङ्कुलितेव for सङ्कुचितेव

कलितेव नताङ्गि लक्ष्यते
तव मुक्तावलयेषु चन्द्रिका ॥ ५८ ॥

कुचयोः प्रतिबिम्बितः समं
विधुरेकोऽपि भवत्ययं द्विधा ।
विधिनेव विभिन्नसम्पुटस्
तव लावण्यसुधासमुद्गकः ॥ ५९ ॥

हृतमुग्धमधूकशोभयोर्
अनयोः पन्नगलोककौमुदि ।
तव चन्द्रकलाः कपोलयोः
पतिताः स्पर्शकुतूहलादिव ॥ ६० ॥

अयमिन्दुमुखि त्वया यथा
समुपैति स्पृहणीयतां जनैः ।
अनयैष समागतस्तथा
निशया पश्य कुरङ्गलाञ्छनः ॥ ६१ ॥

धनुषि क्रियतेऽधिरोहणं
स्मरमौर्वीलतया तनूदरि ।
शशिनेरितया समुच्छ्रिते
पुलिनाद्रौ च पयोधिवेलया ॥ ६२ ॥

---

१. T. reads प्रतिबिम्बयोः for प्रतिबिम्बितः. २. T. reads भृत° for हृत°. ३. Tr. reads परितः for अनयोः; while T. mutilates three letters before पन्नग°. ४. Tr. reads चन्द्रकला for चन्द्रकलाः. ५. K. and T. read पश्य for स्पर्श°. ६. T. reads मनः for जनः. ७. T. reads अनयैव for अनयैष. ८. K. reads समागतःस्वयं for समागतस्तथा; while T. mutilates two letters after समागत. ९. T. and Tr. read तलोदरि for तनूदरि. १०. Tr. reads नयनैर्हृतया and T. shows the mutilation two letters at the beginning and reads अथ नैर्हृतया समुत्थितैः. ११. Tr. reads °लेखया for °वेलया.

कृतचाटुशतैः परस्परम्
मकरन्दार्द्ररजस्सुगन्धिषु ।
स्थितमन्तरमीषु साम्प्रतम्
भ्रमरैः पुष्करवासवेश्मसु ॥ ६३ ॥

मरुता सुहृदेव वीजितं
कुमुदामोदमुचा शनैरितः ।
स्वपिति प्रणयार्द्रयोरिदम्
मिथुनं मानिनि राजहंसयोः ॥ ६४ ॥

अयि चक्रवधूरियं पुरः
करुणं कूजति हा तपस्विनि ।
इह साक्षितयाऽलमावयोर्
उचितं गन्तुमतः कृपावति ॥ ६५ ॥

इति भूतलवासवः स ताम्
अभिधाय प्रमदां प्रियंवदः ।
प्रविवेश तयासमं किल
प्रमनाः केलिनगेन्द्रकन्दरम् ॥ ६६ ॥

झटिति स्फुटभावसङ्कुरां
मधुरामङ्गलतां दधानया ।
शशिकान्तशिलातले ततः
स किलाध्यास्त तया युवाऽन्वितः ॥ ६७ ॥

१. I. reads जीवितं for वीजितं. २. T. reads करुणाकूजित° for करुणं कूजति. ३. Tr. and I. read तपस्विनी for तपस्विनि. ४. Tr. reads इतः, for अतः and K. substitutes कृपावति for कृपावति. ५. T. reads °सङ्कुला for °सङ्कुरां. ६. T. reads °ध्यास तया युवाऽन्वितः for °ध्यास्त तया युवाऽन्वितः

तदनु त्रपया पराङ्मुखीं
पुलकालङ्कृतपीवरस्तनीम् ।
स किलाञ्चितचाटुरानयत्
सुमुखीं तामनुकूलवृत्तिताम् ॥ ६८ ॥

अथ मन्थरलोचनं ह्रिया
विनमत्स्मेरमुखः स्मिताञ्चितम् ।
स ददर्श किल प्रजेश्वरः
सुदृशः स्विन्नकपोलमाननम् ॥ ६९ ॥

यदलं किल मानवत्यभूत्
ऋजुवक्त्रेन्दुमुखी किलैक्षत ।
लिखितेव किलास्त यत् परं
नृपतेस्तेन मनः किलाहरत् ॥ ७० ॥

परिमृज्य मुखं विलासिना
श्रवणेन्दीवररेणुरूषितम् ।
सुदृशः श्रमवारिपङ्किलात्
अलकान्तस्तिलकादपास्यत ॥ ७१ ॥

अथ तां शिथिलीकृतत्रपाम्
असमप्रेमहृतः किलेश्वरः ।
स्मरकेलिकलारसज्ञताम्
अनयद्यूथपतिर्वशामिव ॥ ७२ ॥

१. T., I. and Tr. read °वामन° for °पीवर°. २. T. reads °चाटुनाऽनयत् for °चाटुरानयत्; while Tr. reads स किलान्वितया गिराऽनयत् for स किलाञ्चितचाटुरानयत्. ३. I. reads विनिमत्° and स्मितञ्चित for °विनमत्° and स्मिताञ्चितम् respectively. ४. I. reads अथ कान्तः for अलकान्तः; while T. अलकान्तं for the same.

शिथिलाकुलकेशपाशया
परिमृष्टार्द्र[१]कपोलपत्रया ।
विरलाधररत्नरागया
सुलभ[२]स्वेदमुखेन्दुबिम्बया ॥ ७३ ॥

त्रुटितोज्झितहारलेखया
निबिडाश्लेषकृशाङ्गरागया ।
असमग्रन[३]खाङ्कमण्डित-
स्तनविन्यस्तसकम्पहस्तया ॥ ७४ ॥

अधिकाधिकजातलज्जया
मृदुर्मीलन्नयनत्रिभागया ।
अथ कामपि निर्वृतिं तया
स किलापत् फणिराजकन्यया ॥ ७५ ॥

कुलकम्[४] ।

ददता[५] नलिनीदलानिलं
विकसत्[६]स्वेदकणे कुचद्वये ।
चतुरं किल दीर्घचक्षुषस्
तदनु क्लान्तिरनेन चिच्छिदे ॥ ७६ ॥

अथ स[७]त्रपया धृतांशुकां
जघनस्रस्तविसूत्रमेखलाम् ।

---

१. I. reads परिमृष्टार्द्र° for परिमृष्टार्द्र°. २. T. reads सुलभे for सुलभ°. ३. K. reads °विन्यस्त° for °विन्यस्त°; while T. reads °नखाङ्कमण्डितस्तनविन्यस्तसकन्यकस्तया for °नखाङ्कमण्डितस्तनविन्यस्तसकम्पहस्तया. ४. T. and I. do not insert कुलकम्. ५. T. reads ददतं and Tr. दधता for ददता. ६. I. reads विलसत्° for विकसत्°; while T. °स्वेदकणा for °स्वेदकणे. ७. I. reads सत्रपसन्धृतांशुकाम् for स त्रपया धृतांशुकां.

अवतंसितलोचनोत्पलां
निजमङ्कं ललनां निनाय च ॥ ७७ ॥

सुदृशः स किलान्यतश्च्युतं
स्वपदे मौलिमणिं न्यवेशयत्।
अकरोच्च किलारुणाङ्गुलिर्
ललितावर्तनकुञ्चितान् कचान् ॥ ७८ ॥

पद्मयाऽत्र दर्पणतले लिखिता मयेयं
पत्रावली तरुणि ते वलिताननेति।
स्वप्नान्तरप्रणयजल्पितमात्मभर्तुर्
अश्रूयत स्मितमुखेन रमाङ्गदेन ॥ ७९ ॥

अथ शुचि पठता शुकेन साम
स्फुटमुटजाङ्गणपादपस्थितेन।
विरचितदयितासमागमस्य
प्रसभमभज्यत पार्थिवस्य निद्रा ॥ ८० ॥

झटिति विगते स्वप्नायातप्रियानवसङ्गमे
पुनरपि तथा तत्प्रत्याशानिमीलितलोचनः।
लिखित इव स क्ष्मापालोऽभूत् क्षणं ननु तादृशाम्
अपि मनसिजो धैर्यं लुम्पत्यहो बत साहसम् ॥८१॥

---

१. T., I. and Tr. read स किलाङ्कं ललनां निनाय च for निजमङ्कं ललनां निनाय च; while Tr. substitutes स for च. २. I. reads ऽथ for ऽत्र. ३. I. reads मन्त्रावली for पत्रावली. ४. T. and Tr. read °कल्पित° for °जल्पित°. ५. T. reads अपास्यत for अभज्यत; while I. omits one letter before पार्थिवस्य. ६. I. reads झगिति and T. ढगिति for झटिति. ७. T. reads °प्रेत्याशा° for °प्रत्याशा°.

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये फणिराजसुतास्वप्नसमागमो नाम द्वादशः सर्गः ॥ १२ ॥

---

१. Tr. reads श्रीपरिमलकृतौ नवसाहसाङ्कचरिते फणिराजसुतास्वप्नदर्शनो नाम. T. साहसाङ्कचरिते फणिराजसुतास्वप्नसमागमो and I. परिमलस्य नवसाहसाङ्कचरिते फणिराजसुतास्वप्नसमागमो for श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये फणिराजसुतास्वप्नसमागमो नाम.

# अथ त्रयोदशः सर्गः।

स्वप्नविजृम्भितम् ।

ततस्तथा पञ्चशरप्रतारितः
सजृम्भमुन्मीलयति स्म लोचने ।
कृताङ्गुलिश्लेषविवर्तितोल्लसत्-
भुजांससम्पीडितकुण्डलो नृपः ॥ १ ॥

स सङ्गतं यन्मृगशावचक्षुषः
[२]श्रमाप्तनिद्रः स्फुटमन्वभूदिव ।
झटित्यभूज्जागृदवस्थयाऽस्य तत्
पुरातनालेख्यमिवास्फुटं हृदि ॥ २ ॥

कुचाङ्गरागः कृशमध्यया तया
[३]मयि ध्रुवं सङ्क्रमितो भवेदिति ।
शनैस्स निद्राकलुषेण चक्षुषा
परामशाङ्गमनङ्गमोहितः ॥ ३ ॥

अपास्य वामेतर[४]कर्णभूषणं
तथा शरैरेनमवाकिरत् स्मरः ।
यथास्य धैर्यं गलति स्म मानसात्
सविक्रियं शुक्तिपुटादिवोदकम् ॥ ४ ॥

---

१. I. reads °प्रतापितः for °प्रतारितः. २. K. and I. read समाप्त° for श्रमाप्त°.
३. K. and T. read महत् for मयि. ४. T. reads °कण्ठ° for °कर्ण°.

दृशं विषादस्तिमितामुपान्तगे[1]
निवेश्य तेनाथ निशश्वसे तथा।
यथा मुहुः श्यामलतां[2] जगाहिरे
वितानमुक्ताफलजालकस्रजः ॥ ५ ॥

रमाङ्गदवाक्यम्।

कया नु सारङ्गदृशाऽसि कारितः[3]
कपोलपत्रावलिकल्पनश्रमम्।
तमित्यवोचत्परिहासवानथो
रमाङ्गदः किञ्चिदिव श्लथाङ्गदम् ॥ ६ ॥

ततस्स मुक्तासित[4]माद्धत्स्मितं
जितप्रवालत्विषि दन्तवाससि।
शशंस तस्मै भुजगेन्द्रकन्यका-
समागमं स्वप्नजमब्जलोचनः ॥ ७ ॥

तदाश्रयैवानुचरेण वर्धिता
कथासुधेवास्य ततो विलासिनः।
अभूत् परं मन्मथतापशान्तये
न पद्मिनीपत्रमरुन्न चन्दनम् ॥ ८ ॥

अजायतान्तःकरणेन ताम्यता
न हेमपद्माहरणाय[5] सत्वरम्।

१. Tr. reads उपान्तिके for उपान्तगे. २. I. reads मुहुर्श्यामलतां for मुहुः श्यामलतां. ३. T. reads ऽधिकारितः for ऽसि कारितः. ४. T. reads मुक्ताभित° for मुक्तासित°. ५. T. reads °पद्माभरणाय for °पद्माहरणाय; while I. °पद्माहरणे च for the same.

भुजः सदा रक्षणदीक्षितः क्षितेर्
अमन्दमस्पन्दत चास्य दक्षिणः ॥ ९ ॥

वङ्कुमुनेरागमनम्।

ततः पिनद्धोज्ज्वलहेमवल्कलं
वहन्तमंसार्धविलम्बिनीर्जटाः।
सनाथवामेतरपाणिपङ्कजं
परिस्फुरन्त्या स्फटिकाक्षमालया ॥ १० ॥

विशालनेत्राभरणैरनुद्रुतं
सदैव दर्भाङ्कुरलालितैर्मृगैः।
सशिष्यमभ्यागतमङ्गणान्तिके
विशाम्पतिर्वङ्कुमहर्षिमैक्षत ॥ ११ ॥

युग्मकम्।

विमुक्तपर्यङ्कतलः ससम्भ्रमं
निरीक्ष्य सद्यो मणिमन्दिराद्बहिः।
किरीटरत्नद्युतिदीप्तभूतलं
प्रणाममस्मै स चकार सादरम् ॥ १२ ॥

ततः कृताशीर्मणिवेदिकास्तृते
मुनिर्न्यषीदत् सकुरङ्गचर्मणि।
स चासनत्वं तदनुज्ञयाऽनयत्
नृचन्द्रमाश्चन्द्रमणेः शिलातलम् ॥ १३ ॥

---

१. T. reads अंसाग्र for अंसार्द्ध°. २. I. substitutes सन्दानितकम् for युग्मकम्; while K. and T. insert any of these. ३. I. reads °लिप्त° and T °तप्त° for °दीप्त°.

मुनिप्रश्नः ।

अपि श्रमेणायतमार्गजन्मना
तनुर्महाराज तवेयमुज्झिता ।
मुनिःप्रहर्षेण कृतार्हणस्तदा
स राजचूडामणिमित्यपृच्छत ॥ १४ ॥

भूपतिवाक्यम् ।

अथादधद्वक्त्र इवांशुकाञ्चलं
तुषारपाण्डुप्रसृतैर्द्विजांशुभिः ।
अकृत्रिमप्रश्रयपेशलं वचस्
स भूपतिर्वक्तुमिति प्रचक्रमे ॥ १५ ॥

अमी सहन्ते मम तात न श्रमम्
प्रणामलग्नास्तव पादपांसवः ।
कियच्चिरं चन्द्रमरीचिचुम्बिते
पदं निधत्ते कुमुदे दिनक्लमः ॥ १६ ॥

कपिदर्शनम् ।

नृलोकपातालतलाश्रये मिथः
कथानुबन्धे शिथिलीभवत्यथ ।
प्रयाणपर्युत्सुकमानसो मुनिः
स यावदाप्रष्टुमियेष पार्थिवः ॥ १७ ॥

अनेन तावद्ददृशे पुरःस्थितो
विशाललाङ्गूललतो वलीमुखः ।

---

१. I. reads सतां for तदा. २. I. and Tr. °रित्यपृच्छत and T. °रेत्यपृच्छत for °मित्यपृच्छत. ३. T. reads °प्रणय° for °प्रश्रय°. ४. T. reads °मण्डिते and K. °शीतले for °चुम्बिते.

[1]अधःस्थलीनिर्गतजह्नुकन्यको
हिमोज्ज्वलः पाद इवाम्बिकागुरोः ॥ १८ ॥

करेण बिभ्रन्मधुमत्तकेरली-
कपोलवत्पाटलकान्ति दाडिमम् ।
अहर्मुखाकृष्टपतङ्गमण्डलः
फलाशया बाल इवा[2]ञ्जनीसुतः ॥ १९ ॥

[3]सन्दानितकम् ।

फलार्पणम् ।

द्वयोरिवार्थः खलु धर्म-कामयोस्
तयोस्त्रिलोकस्पृहणीययोः कपिः ।
मुनीन्द्र-भूचन्द्रमसोः स्थितोऽन्तरे
तपस्विभिः स्मेरमुखैरदृश्यत ॥ २० ॥

अथार्पितं तेन फलं तदाददे
स विस्मितो मध्यमलोकवासवः ।
जपारुणं मारुतिनेव मैथिली-
शिखण्डरत्नं दशकण्ठशा[4]सनः ॥ २१ ॥

अकृत्रिमश्रीनिलयेन रागिणा
नरेन्द्रचिह्नाङ्कितहस्तशोभिना[5] ।
[6]सुवृत्ततामुद्वहता स्वभावतः
स तेन रेजे भृशमात्मना यथा ॥ २२ ॥

---

१. Tr. reads अथ for अधः°. २. T. Tr. and I. read अञ्जना° for अञ्जनी°. ३. T. and Tr. do not insert this. ४. K. reads °शातनः for °शासनः. ५. K. reads °शालिना for °शोभिना. ६. T. reads सुवृत्तता° for सुवृत्तता°.

अजातपाकस्य नवातपाधिकां
पुनः पुनस्तस्य विलोक्य शोणताम् ।
[1]नवप्रवालोपममेणचक्षुषः
स्मरन् स बिम्बोष्ठमवाप [2]शून्यताम् ॥ २३ ॥

अथास्य सीदन्मणिबन्धनात् करात्
[3]अवाञ्चतः कम्पविसूत्रिताङ्गुलेः ।
पपात पश्चादिव हेमकुट्टिमे
[4]तदस्फुटद्द्रागिव दाडिमीफलम् ॥ २४ ॥

तदन्तरात् किंशुककान्तितस्करः
स्फुरन्मणीनां निकरो[5]ऽथ निर्ययौ ।
उदर्चिषः पुष्पशरासनक्रुधा
कणोत्करस्त्र्यम्बकलोचनादिव ॥ २५ ॥

अथ द्वयेनावनिपाकशासनः
स विस्मयस्याग्रमहीमनीयत ।
वनौकसा तेन विनीत[6]वृत्तिना
विकीर्णभासा मणिदाडिमेन च ॥ २६ ॥

स चाद्भुतप्राभृततोषितः करे
चकार [7]रेखामणिकङ्कणं कपेः ।
[8]घनात्ययतोर्निजमिन्दुपाण्डुरे
पयोदखण्डे [9]हरिवाडिवायुधम् ॥ २७ ॥

---

१. T. has नच्च प्रवाले--मेणचक्षुषः for नवप्रवालोपममेणचक्षुषः. २. K. reads विस्तताम् for शून्यताम्. ३. T. reads अवाञ्चितं for अवाञ्चतः. ४. T. reads ततः for तद°; while I. and Tr. read प्रागिव for द्रागिव. ५. I. and Tr. read विनिर्ययौ for ऽथ निर्ययौ. ६. Tr. reads °वर्तिना for °वृत्तिना. ७. T. and Tr. read सेवा° for रेखा°. ८. I. reads घनात्ययत्तोनिज° for घनात्ययतोर्निज°. ९. K. reads मघवान् for हरिवाड् and gives marginal reading हरिवानिवायुधम् for हरिवाडिवायुधम्.

ततस्सुधासूतिमिवोज्झिताकृतिर्
नवाञ्जनश्यामलयाङ्गलेखया ।
नृपः क्षणादेव विचित्रभूषणम्
पुमांसमग्रे न[1] हरिं तमैक्षत ॥ २८ ॥

कृतानतिर्[2] विस्मितमानसे मुनौ
रमाह्रदे सादरमुक्तलोचनः ।
व्यधात् प्रणामं स कृताञ्जलिर्[3] नृपे
कपोलवेल्लत्कलधौतकुण्डलः ॥ २९ ॥

मुनिकृतः प्रश्नः ।

अलङ्कृतः कस्य वदान्वयस्त्वया
पदं क्व ते किञ्च कपिर्भवानभूत् ? ।
तमेवमाह स्म सविस्मयोर्मिणा
नृपेण साकूतविलोकितो मुनिः ॥ ३० ॥

शशिखण्डवाक्यम् ।

ततः स मुग्धेन्दुमयूखबन्धुभिः
प्रसादयन्[4] दन्तमरीचिभिर्दिशः ।
नवाम्बुभारालसनीरदावली-
निनादधीरामिति वाचमाददे ॥ ३१ ॥

शिखण्डकेतोश्शशिखण्ड इत्यहं
मुनीन्द्र विद्याधरशासितुः सुतः ।

१. Tr. reads स for न; while T. substitutes ण for the same. २. T. reads कृतामतिं for कृतानतिः. ३. T. reads कृताञ्जलिं for कृताञ्जलिः. ४. I. reads प्रसाधयन् for प्रसादयन्.

सुराङ्गनाध्यासितरत्नकन्धरे
ममाधिवासः शशिकान्तपर्वते ॥ ३२ ॥

रथाङ्गपाणेः प्रतिमा समुन्नतः
स्वयं महानीलमयी विनिर्गता[1] ।
इति प्रवादः परमीक्षितुं च तां
[2]गता मणिद्वीपमितः पुरस्त्रियः[3] ॥ ३३ ॥

ममापि तस्यामधिकं कुतूहलं[4]
तदेहि यावः[5] कृत एष तेऽञ्जलिः ।
कदाचिदेवं सहसोपसृत्य मां
प्रिया ययाचे प्रणिपत्य मालती[6] ॥ ३४ ॥

सन्दानितकम्[7] ।

ततः खमिन्दीवरनीलमेकतस्
तया सहोत्पत्य जवेन गच्छतः ।
स[8] तात शैलेन्द्रभरक्षमः क्षणात्
पपात मे लोचनगोचरेऽर्णवः ॥ ३५ ॥

उपोढनानामणिमौक्तिकोत्करैः
करैरिवोर्ध्वं प्रसरद्भिरूर्मिभिः[9] ।
अनर्घ्यमर्घ्यं जगदेकचक्षुषे
समुद्यतो दातुमिवांशुमालिने ॥ ३६ ॥

---

१. T. and Tr. read विनिर्मिता for विनिर्गता. २. K. reads गतो for गता. ३. K. reads पुरात् स्त्रियः for पुरस्त्रियः. ४. T. reads कुतूहली for कुतूहलं. ५. T. I. and Tr. read यावत् for यावः. ६. Tr. reads मालिनी for मालती. ७. K. reads युग्मकम् and Tr. युग्मम् for सन्दानितकम्; while T. does not insert any of these. ८. T. substitutes सु° for स. ९. T. Tr. and I. read अंशुभिः for ऊर्मिभिः.

नवप्रवालद्युतिपाटलोदरः
करो मुरारेरिव शार्ङ्गलाञ्छितः।
अलंकृतो जह्नुमहर्षिकन्यया
पृथुर्जटाजूट इवान्धकद्विषः ॥ ३७ ॥

उदग्रकल्लोलकदर्थितग्रहैर्
अगाधपातालतलावगाहिभिः।
दिशो निरुन्धन् नवमेघनादिभिर्
निमग्नदिङ्नागमदाविलैर्जलैः ॥ ३८ ॥

समेधितश्रीरभितस्ततोत्थितैस्
स्फुरन्मणिस्तोममयूखदामभिः।
युगान्तजीमूतशतोदयार्पितैः
पुलोमकन्यापतिकार्मुकैरिव ॥ ३९ ॥

उपान्तविश्रान्तपयोदमण्डलैर्
जलद्विपप्रस्तुतवप्रकेलिभिः।
शिरोल्लसद्द्वीपधिया समीक्षितैर्
विशालनेत्रैस्तिमिभिः कृताद्भुतः ॥ ४० ॥

सुजातकाठिन्यपयोधराः स्पृहाम्
उपाहरन्तीः पथि तादृशोः पथि।
क्वचिद्दधानः शरदिन्दुपेशलाश्
शिलासु शुक्तीर्जलमानुषीरिव ॥ ४१ ॥

---

१. T. reads °दरम् for °दरः. २. T. reads शाङ्ख° and I. शाङ्ग° both for शार्ङ्ग°. ३. T. reads °महा° for मदा°. ४. K reads तथोत्थितैः, T. तथोत्थितैः and Tr. समुत्थितैः for ततोत्थितैः. ५. I. reads °सतोयदार्पितैः for °शतोदयार्पितैः. ६. T. reads °सीपधिया for °द्वीपधिया. ७. T. and I. read विशालदीर्घैः for विशालनेत्रैः. ८. K. reads °पयोधरस्पृहाम् for °पयोधराः स्पृहाम्. ९. K. reads °मानुषीति च and T. the same, but substitutes °व for च.

निर्झौघसीमन्तितसानुकर्दमैर्
बृहद्दरीपुञ्जितरत्नराशिभिः।
अधः प्रविष्टोद्धृतकच्छपोद्धृतैर्
महाचलैरुल्लिखिताम्बरः क्वचित् ॥ ४२॥

सवेगवेलानिलवेल्लिताः क्वचित्
नवोद्गता विद्रुमकन्दलीर्दधन्।
शिखा इवोर्ध्वं तरुणार्कलोहितोः
विनिर्गता वाडवजातवेदसः ॥ ४३ ॥

क्वचित् सुधापाण्डुनि फेनमण्डले
निलीनदूर्वादलनीलनीरदः।
सनाथतां नीत इवोपरि स्फुटम्
फणीन्द्रपर्यङ्कशयेन शार्ङ्गिणा ॥ ४४ ॥

क्वचिन्मणीनां कुमुदोदरत्विषस्
सितेतरेन्दीवरमेचकाः क्वचित्।
क्वचिद्दधानश्शुकचञ्चुपाटलास्
तटेषु मुक्ताशबलोदराः शिलाः ॥ ४५ ॥
कुलकम्।

तथैव तस्योपरि गत्वरस्य मे
तमालनीलेन पथा पयोमुषाम्।
त्वराविशीर्णश्लथबन्धनाञ्चितः
पपात सीमन्तमणिर्मृगीदृशः ॥ ४६ ॥

१. T. reads महाबलैः for महाचलैः. २. E K. read °लोहिनीः for °लोहिताः. ३. I. reads सितेन्तरेन्दी° for सितेतरेन्दी°. ४. T. does not insert this. ५. I. reads °विलीन° for °विशीर्ण°. T. reads °वितीर्ण and Tr. °वतीर्ण° or °विकीर्ण° all for the same. ६. E. reads बन्धमात्कपात् for °बन्धनाञ्चितः.

प्रधावमानेन मयाऽन्तरान्तरा
नखाग्रनिर्लूनमयूखपल्लवः ।
स ध्वाऽन्तरं दीधितिमानिवोदधेर्
विवेश कोशाग्रतरुच्छटारुणः ॥ ४७ ॥

निवर्तमानं तु हठाद्विकृष्यता
तुरङ्गहस्तेन निरुन्धता नभः ।
क्षणादिव क्वापि रसातलोदरे
करीव चिक्षेप कृतारवोऽर्णवः ॥ ४८ ॥

स्त्रीदर्शनम् ।

मया ऽथ तत्र भ्रमता सविस्मयं
तमुद्वहन्ती मणिमुत्प्रभं करे ।
अदृश्यतैका विशती तपोवनम्
स्मरस्य मूर्ता ममतेव कन्यका ॥ ४९ ॥

ततः प्रियामौलिमणिर्न मेऽर्पितः
पुनः पुनः प्रार्थितयाऽपि यत् तया ।
अहं तदस्या मकराङ्किते बलात्
अपाहरं मन्मथरत्नपादुके ॥ ५० ॥

किमाश्रमं शून्यमिदं तपोधनैर्
अनेन हा धिङ् मुषितास्मि दस्युना ।
अथेति बाष्पोद्गमगद्गदैः पदैर्
मुहुर्वदन्ती करुणं रुरोद सा ॥ ५१ ॥

१. Tr. reads °निर्धूत° for °निर्लून°. २. K. Tr. and I. read °च्छदारुण: for °च्छटारुणः. ३. K. reads विवर्तमानं for निवर्तमानं. ४. T. reads मया for मया. ५. T. reads मणिमत्प्रभं for मणिमुत्प्रभं. ६. K. reads मूर्तिर्मम सैव° for मूर्ता ममतेव. ७. T. reads न तस्या° and K. च तस्या° for तदस्या°. ८. I. and T. read गलात् for बलात्. K. also reads the same, but corrects in the margin बलात्.

मुनिदर्शनम् ।

ततस्तदीये रुदितध्वनौ श्रुते
ससम्भ्रमं कोऽपि महातपा मुनिः ।
विनिर्ययौ रत्नशिलागृहाद्बहिस्
तमालभासस्तरणिर्घनादिव ॥ ५२ ॥

अनेन केनापि तवाश्रमे बलात्
इदं हि ताताभरणं हृतं मम ।
इति क्रुधं तद्वचसा स आददे
हविर्निषेकेण शिखामिवानलः ॥ ५३ ॥

शापवर्णनम् ।

निबद्धभीमभ्रुकुटिर्विलोकयन्
दृशा तदोल्काकपिशोऽग्रतारया ।
स तीव्रकोपस्फुरिताधरोऽवदत्
वचो ममाक्षिप्य कृतान्तेरिति ॥ ५४ ॥

प्रसूनमप्यत्र न जातु वीरुधां
हरत्ययं नः पवनस्तपोवने ।
त्वया तु सम्प्रत्यबलाविभूषणे
शठाश्मनाशाय करः प्रसारितः ॥ ५५ ॥

अकारि कापेयमिदं त्वयेदृशं
यदद्य सद्यः कपिरेव तद्भव ।

---

१. K. reads तरणिर्महाद्रिव, T. तरणी गृहादिव and Tr. सरसा तपोवनात् all for तरणिर्घनादिव. २. K. reads तवाममेव मे for तवाश्रमे बलात्. ३. T. and Tr. read समाददे for स आददे. ४. I. reads शिलाम् for शिखाम्. ५. I. reads °कपिलोऽग्र° for °कपिशोऽग्र°. ६. T. reads त्वयेरितं नृशंस° for त्वयेदृशं यदद्य°.

ततः स मामित्यशपत् कमण्डलोर्
अपस्समादाय दवानलोपमः ॥ ५६ ॥

कोपशान्तिः ।

अथास्य कोपः प्रशशाम मानसे
शनैः कृपा सानुशये प्रसीदति ।
अपां कणस्तिष्ठति वीचिकम्पिते
न पद्मिनीपत्रपुटोदरे चिरम् ॥ ५७ ॥

इहानुतापो भगवन्विमुच्यताम्
इयं मदीया भवितव्यतेदृशी ।
तदुच्यतां शापनिशामुखोद्गतं
कदा ममेदं तिमिरं व्यपैष्यति ॥ ५८ ॥

मयैवमुक्तः स तदैवमूचिवान्
यदा पुरो वङ्कुमुनेरिहागतः ।
करे तवाधास्यति वत्स कङ्कणं
स नार्मदं सीयकराजनन्दनः ॥ ५९ ॥

ततः प्रभृत्येव वलीमुखाकृतेः
समाः सहस्रं वसतो रसातले ।
अनेन मे सम्प्रति पार्थिवेन्दुना
तवाश्रमे शापतमस्तिरस्कृतम् ॥ ६० ॥

प्रतिक्रियाकरणेच्छा ।

कृतं यदेतेन मुनीन्द्र लीलया
प्रतिक्रियां तत्र न कर्तुमस्म्यलम् ।

---

१. T. reads परः for अपः. २. T. reads अपां गणः for अपां कणः. ३. T. reads अवः for यदा. ४. Tr. mutilates seven letters at the beginning of this line ; while K. reads स नार्मदेशीयक° for स नार्मदं सीयक°.

हिमत्विषः प्रत्युपकारगोचरो
मरीचिलीढक्रशिमा किमंशुमान् ॥ ६१ ॥
[1]तथाप्ययं देव निजप्रयोजने
लघीयसि क्वापि नियोज्यतां जनः।
अनूरुमुर्वीतलरत्नदीपकः
किमर्यमा नाधित सूतकर्मणि ॥ ६२ ॥
तेनैवमुक्तः प्रणयोन्मुखेन
नृपस्त्रपानम्रमुखो बभूव।
अतादृशानां [2]स्तुतयः प्रकृत्या
[3]मदं यदुद्दीपयितुं यतन्ते ॥ ६३ ॥

निजवृत्तकथनम्।

एवं सुधारससमृद्धिमनोहरेण
श्लाघ्येन तेन शशिखण्डसमागमेन।
कामप्यवापदुमया [4]घटितस्य लक्ष्मीं
[5]स क्ष्मापतिर्झटिति जूट इवाष्टमूर्तेः ॥ ६४ ॥
तेनाथ सूनृतवचःश्रुतये स पृष्टः
पृथ्वीतलागमनहेतुमजानतेव।
आ[6]ख्यातवान् स्मितसुधास्नपितोष्ठबिम्बस्
तस्मै निजव्यतिकरं [7]नरलोकपालः ॥ ६५ ॥
विद्याधरस्तदनु स प्रहितोऽपि राज्ञा
नैव स्वधामगमनाभिमुखो बभूव।

---

१. T. reads अथापि for तथापि. २. T. reads श्रुतयः for स्तुतयः. ३. Tr. reads मुदं for मदं. ४. I. reads घटितः स for घटितस्य. ५. I. and T. read लक्ष्मीपतिः for स क्ष्मापतिः; while T. substitutes घटित° for झटिति. ६. K. reads आख्यातवानुरस्फुरितोष्ठबिम्बः for आख्यातवान्स्मितसुधास्नपितोष्ठबिम्बः; while T. omits two letters after स्मित°. ७. T. reads नव° for नर°.

पूर्वोपकारिणि जनेऽनुपकृत्य किञ्चित्
यान्तो यदुन्नतधियः किमपि त्रपन्ते ॥ ६६ ॥
देव प्रसीद समितिः क्रियतामिदानीं
भृत्यः स्वपादरजसामयमग्रयायी।
तस्येति वल्गु वचनं वचसा महर्षेः
सम्राट् ततः स कथमप्युररीचकार ॥ ६७ ॥

विद्याधरसैन्यागमनम्।

आमन्द्रशङ्खपटहस्वनसूचितं प्राक्
सैन्यं क्षणान्निजमथ स्मृतमात्रमेव।
धौतासिपत्रबहुलांशुलतोपगूढम्[1]
पातालसन्तमसमस्य पुरो बभूव ॥ ६८ ॥

प्रस्थानम्।

तेनोपपादितमथो रथमुत्पताकम्
अध्यास्य कार्मुकसनाथकरो नरेन्द्रः।
वज्राङ्कुशम्प्रति स वङ्कुमुनिप्रयुक्तः
प्रस्थानमङ्गलविधिर्मसृणं प्रतस्थे ॥ ६९ ॥
लग्नेनाङ्के युगपदुटजद्वारदेशाददूरे[2]
पश्यन्तीनां मुनिमृगदृशां लोचनांशूत्करेण।
उद्दामाजिक्रतुमखमहादीक्षया[3] स क्षितीशो
मेध्यामेणत्वचमिव दधन् स क्षणं लक्ष्यतेस्म ॥ ७० ॥
चलितयतिसमाधि त्रस्तसारङ्गशावं
निभृतशुकभृतोच्चैर्नाडिमुड्डीनबर्हि।

---

१. T. I. and Tr. read °गूढ° for °गूढम्. २. K. reads सुभगपुटजद्वारदेशात्सुदूरे for युगपदुटजद्वारदेशाददूरे. ३. T. I. and Tr. read °मुख° for °मख° and K. विधेर्दीक्षया for °महादीक्षया.

हरिणमिथुनमुक्तान्योन्यकण्डूयनं तत्
मुनिवनमभितो ऽभूत् सैन्यकोलाहलेन ॥ ७१ ॥

अथ पथि नवसाहसाङ्कः स विद्याधरैर्वन्दितः
प्रमुदितमुनिकन्यकामुक्तनीवारलाजाञ्जलिः ।
श्रियमधित रमाङ्गदेनान्वितस्तूर्यघोषोर्मिभिः
कुलगिरिकुहरप्रतिध्वानं दीर्घैर्निरुन्धन्दिशः ॥ ७२ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये विद्याधराधिपसमागमो नाम त्रयोदशः सर्गः ॥ १३ ॥

---

१. Tr. reads इति परिमलस्य कृतौ नवसाहसाङ्कचरिते विद्याधराधिपसमागमो नाम त्रयोदशः सर्गः. I. reads the same, but omits कृतौ and नाम; while T. परिमलकालिदासस्य कृतौ साहसाङ्कचरिते विद्याधराधिपसमागमस्त्रयोदशोऽध्यायः ।

# अथ चतुर्दशः सर्गः ।

आकाशारोहणम् ।

अथाश्रमोपान्तमहीं विहाय
नेमिस्वनोत्कण्ठितनीलकण्ठाम् ।
रथोऽस्य विद्याधरमन्त्रशक्त्या
रथाङ्गपाणेः पदमारुरोह ॥ १ ॥

ससम्भ्रमोत्तम्भितकर्णतालम्
आकर्णितो दिक्करिभिस्सकम्पैः ।
आध्मातशङ्खस्वनमांसलोऽग्रे
तस्योदगान्मङ्गलतूर्यघोषः ॥ २ ॥

उदस्य वक्त्राणि नभस्थलेन
यान्तं तमैक्षन्त तपस्विकन्याः ।
आकर्णविस्तारितमुग्धनेत्राः
पत्रान्तरैराश्रमपादपानाम् ॥ ३ ॥

व्रजन् स विद्याधरवाहिनीनां
मध्ये बभौ मध्यमलोकपालः ।
अनल्पसौन्दर्यसुधैकसूतिः
शशीव नक्षत्रपरम्पराणाम् ॥ ४ ॥

---

१. T. reads °यन्त्रशक्त्या for °मन्त्रशक्त्या. २. Tr. reads °मुत्पपात for °मारुरोह. ३. K. and T. read °त्तंसित° for °त्तम्भित°. ४. K. reads सकृद्यः for सकम्पैः; while T. omits one letter after सकृ°. ५. K. reads °ध्वनि° and T. °ध्वन° both for °स्वन°. ६. K. reads °पिप्पलानाम् for °पादपानाम्. ७. T. reads °सुधौक° for °सुधैक°.

कुतूहलोल्लासितपक्ष्मलेखा-
न्याकृष्टकर्णोत्पलविभ्रमाणि[1] ।
तस्मिन्नमुच्यन्त नितम्बिनीभिर्
अपाङ्गवल्गीनि[2] विलोचनानि ॥ ५ ॥

रमाङ्गदकृतं वर्णनम्।

अथान्तिकस्थेन स चाभ्यधायि
रमाङ्गदेनेत्थमवन्तिनाथः ।
सहस्रशः[3] खे चलितानि पश्यन्
विद्याधराणां पुरतो बलानि ॥ ६ ॥

हैमं नृप स्यन्दनमुत्पताकम्
आकम्पि रत्नाङ्कितकेतुमेते[4] ।
सहस्ररश्मेरिव वालखिल्याः
विद्याधरास्ते परिवारयन्ति ॥ ७ ॥

व्रजन्नमर्त्यप्रमदाविमुक्त-
मन्दारमालाजटिलांसकूटः[5] ।
कुन्दच्छटापाण्डुसटाकलापः[6]
कात्यायनीसिंह इवावभासि[7] ॥ ८ ॥

प्रयाणतूर्यध्वनिरेष किं ते
पातालकुक्षिप्रतिनादसान्द्रैः[8] ।

---

१. I. reads °लेखानिकृष्ट° for °लेखान्याकृष्ट°. २. Tr. reads °वर्त्तीनि विलोकितानि for °वल्गीनि विलोचनानि. ३. Tr. reads °शाखाचलितानि for °शः खे चलितानि ४. T. reads °सूतमेतत् and K. °केतु भेजे both for °केतुमेते. ५. Tr. reads °जानितांस° for °जटिलांस°. ६. Tr. reads °कपालः and K. °कपोलः for °कलापः; while Tr. reads °च्छटापांशुसटा° for °च्छटापाण्डुसटा°. ७. K. reads इवावभाते for इवावभासि. ८. T. reads °प्रतिशान° and I. °प्रथिनाद° for °प्रतिनाद°.

रवः प्रसर्पत्युत[1] भैरवोऽयम्
अकालकल्पान्तपयोधराणाम् ॥ ९ ॥

मूले भुवः कज्जलधूलिकल्पम्
आलक्ष्यते पश्य निलीनमेतत्[2] ।
नीरन्ध्रविद्याधरमौलिरत्न-
प्रभाङ्कुरप्रोशितमन्धकारम्[3] ॥ १० ॥

आयामिमाला[4]मणिकान्तिदण्डैर्
उत्सारयन्तः परितस्तमांसि ।
अमी मरुन्नर्तितचामरास्ते
खमुल्लिखन्तीव खुरैस्तुरङ्गाः ॥ ११ ॥

विहस्य[5] विद्याधरबालिकाभिः
समं विमुक्ता नयनत्रिभागैः ।
प्रस्थानलाजाञ्जलयस्तवैते
रथे पताकास्खलिताः पतन्ति ॥ १२ ॥

नरेन्द्र विद्याधरपुङ्गवानाम्
एते पुरः[6] पश्य कृपाणपट्टाः ।
कालाञ्जनश्यामतया[7]ऽऽश्रयन्ते
तरङ्गतां व्योममहार्णवस्य ॥ १३ ॥

वाचालयन्त्यः ककुभां[8] मुखानि
नादेन जाम्बूनदकिङ्किणीनाम् ।

---

१. Tr. reads °स्यति for °स्युत. २. Tr. reads नवीनम् for निलीनम्. ३. T. and I. read °प्रेरितम् for °प्राशितम्. ४. I. reads आयान° for आयामि°; while T. आयानमाया° for आयामिमाला°. ५. K. reads चिरस्य for विहस्य. ६. T reads पुनः for पुरः. ७. K. reads स्वकाञ्जनश्यामतया, T. also the same, but it has कालाञ्जनश्यामतमा for कालाञ्जनश्यामतया. ८. K. and T. read वाचालयन्त्या ककुभां for वाचालयन्त्यः ककुभां.

इमा विमानावलयः कथञ्चिद्
अन्योन्यरुद्धप्रसराः प्रयान्ति ॥ १४ ॥

वातवर्णनम् ।

आधूतकार्तस्वरकेतुयष्टिर्
एनान्यशोकस्तबकारुणानि ।
आनर्तयत्येष पताकिनीनां
वातः पताकांशुकपल्लवानि ॥ १५ ॥

नभश्चराणां व्रजताममीषाम्
अन्योन्यपीनांसविघर्षणेन ।
उल्लासितः कुङ्कुमपांसुपूरः
पिशङ्गयत्येष दिशां मुखानि ॥ १६ ॥

प्रेक्षकस्त्रीवर्णनम् ।

सरत्नकाञ्चीवलयैर्विलास-
सिंहासनैर्मन्मथपार्थिवस्य ।
इतो नितम्बैरसितेक्षणानां
व्याप्तान्तरं व्योम समाप्तिमेति ॥ १७ ॥

अन्योन्यसङ्घट्टविसूत्रितानि
कुमुद्वतीकान्तकरोपमानि ।
एतानि पश्याम्बरतः पतन्ति
विमानमुक्ताफलजालकानि ॥ १८ ॥

एताः प्रयान्त्यः पुरतो विमानैर्
विवर्त्य बाला मुखपङ्कजानि ।

---

१. T, reads एव for एष. २. T. reads °कलोपमानि and Tr. °कलेवराणि both for °करोपमानि. ३. Tr. reads भपरतः for अम्बरतः.

अपाङ्गविश्रान्तविलोलतारैस्
त्वां नाथ नेत्राञ्जलिभिः पिबन्ति ॥ १९ ॥

आसामितः सत्वरगामिनीनां
गतागताभ्यां मणिकुण्डलानि ।
भिन्दन्ति विद्याधरकामिनीनां
कपोलकालागरुपत्त्रकाणि ॥ २० ॥

इतो मिथः पार्श्वविघट्टितेषु
जवाद् विमानेषु समापतत्सु ।
आसामितः प्रेङ्खितमध्यरत्न-
विसूत्रिता हारलताः स्फुटन्ति ॥ २१ ॥

एते गतिक्षोभवशात् वधूनाम्
पश्योन्मयूखा मणिकर्णपूराः ।
इतस्तले सञ्चरतामहीनां
निपत्य चूडामणिषु स्वनन्ति ॥ २२ ॥

पातालमेतन्नयनोत्सवेन
विचिन्त्य शून्यं शशलाञ्छनेन ।
इहाङ्गनाभिः स्वमुखच्छलेन
कृताऽम्बरे चन्द्रमयीव सृष्टिः ॥ २३ ॥

इतो रसं पल्लवयन्ति वीरं
विद्याधराणां करवालवल्लयः ।

१. Tr. reads °गत्वराणां, I. °मित्वराणां for °गामिनीनां ; while Tr. mutilates four letters at the end of this line. २. I. reads मितः for मिथः. ३. T. reads °मिति for °मितः ; while Tr. °रत्नमध्या for °मध्यरत्न°. ४. K. reads त्रुटन्ति for स्फुटन्ति. ५. Tr. reads स्थले for तले. ६. Tr. reads स्खलन्ति for स्वनन्ति. ७. T. reads इभाङ्गनाभिः for इहाङ्गनाभिः. ८. K. reads चान्द्रमसीव for चन्द्रमयीव. ९. T. reads करवालवल्लयः and I. करवारवाल्लयः both for करवालवल्लयः.

एताश्च शृङ्गारमितोऽङ्गनानां
दृशो नवेन्दीवरदामदीर्घाः॥ २४॥

झटित्यवाप्तप्रतिबिम्बमेतत्
सैन्यं विलोक्य स्फटिकाङ्गणेषु।
सविस्मयं नागपुराङ्गनाभिर्
इतः क्रियन्ते नयनोत्पलानि॥ २५॥

नरेन्द्र तस्माद्गगनावगाहि-
त्वद्दर्शनव्यग्रतपस्विपङ्क्तेः।
दूरं हविर्धूमसुगन्धिसीम्नः
स्थानात् वयं वङ्कुमुनेः प्रवृत्ताः॥ २६॥

वनवर्णनम्।

यथाऽयमभ्येति पुरो नभस्वान्
आकृष्टनानाविधपुष्पगन्धः।
अग्रे तथाऽभ्रंलिहभूरुहं नः
शङ्के वनं दृक्पथमेष्यतीति॥ २७॥

एभिर्महीपाल विमानरत्नैर्
अग्रेसरैस्सम्भ्रममुक्तमार्गः।
निष्कम्पकेतुर्महताऽऽस्पदेन
रथस्तवायं वियति प्रयाति॥ २८॥

---

१. B. reads °धाम° for °दाम°. २. B. and I. read °काङ्गनेषु and T. and Tr. °काङ्कणेषु both for °काङ्गणेषु. ३. I. substitutes °णा° for °ना°. ४. B. reads °वयुर्वङ्कुमुनेः for °वयं वङ्कुमुनेः; while T. स्थानद्वयं for स्थानात् वयं. ५. B. reads विवस्वान्, but in the margin there is नभस्वान् for it. ६. Tr. reads तथाभ्रादिमहीरुहं for तथाभ्रंलिहभूरुहं. ७. Tr. reads स्वनेन for ऽऽस्पदेन.

सितप्रसूनस्तबकैस्तरूणाम्
एषा पुरस्तारकितान्तरिक्षा ।
झटित्यशेषैव निमेषमात्राद्
उन्मीलिता पश्य वनान्तलेखा ॥ २९ ॥

यदीश विद्याधरवाहिनीयम्
आकाशतः किञ्चिदधः प्रवृत्ता ।
अवैमि चित्ते निहितं तदस्याः
पदं वनालोकनकौतुकेन ॥ ३० ॥

एषा तमालावलिनीलकान्तिर्
उपोढरामामुखहेमपद्मा ।
सेना वनस्याभिमुखं प्रयाति
पश्याम्बुराशेरिव जह्नुकन्या ॥ ३१ ॥

अस्याः क्षमापाल वनान्तराजेर्
विमानपङ्क्तिः पुरतः स्थितेयम् ।
आलम्बते रत्नकिरीटलक्ष्मीम्
मणिप्रभोद्गीर्णमहेन्द्रचापा ॥ ३२ ॥

एते खलीनक्षतशोणितौक्ताः
पश्येन्द्रगोपश्रियमुद्वहन्तः ।

---

१. Tr. reads अशेषेण for अशेषैव. २. Tr. reads यश्य for यदीश. ३. T. and Tr. read इव for अधः. ४. Tr. reads विहितं for निहितं and T. तदन्याः for तदस्याः; while I. च तस्याः for तदस्याः. ५ K. reads तमालच्छद°, I. तमालावनि° and Tr. तमालीवन° all for तमालावलि°. ६. B. reads °नाना° for °रामा°. ७. Except Tr. all read महावनस्य for सेना वनस्य. ८. T. reads श्यामाम्बुराशेः for पश्याम्बुराशेः. ९. I. reads °लक्ष्मी-मणि° for °लक्ष्मीम् मणि°. १०. Tr. reads °शीर्ण° for °गीर्ण°. ११. T. reads °ताङ्काः for °तात्काः. १२. T. and Tr. read °कोप° for °गोप°, but the latter reads so in the margin.

तुरङ्गलालाजलबिन्दवस्ते
लुठन्ति[1] हेमद्रुमपल्लवेषु ॥ ३३ ॥

मन्दानिलान्दोलितपल्लवाग्राः
समग्रपुष्पाहरणोद्यताभ्यः[2] ।
इतो लताः पार्थिव संरभन्ते[3]
लावण्यमादातुमिवाङ्गनाभ्यः॥ ३४ ॥

अमूनि पुष्पाणि महीरुहाणाम्
आभान्ति लीन[4]भ्रमरोदराणि ।
विद्याधरीविभ्रमदर्शनार्थम्
उत्तानितानीव[5] विलोचनानि ॥ ३५ ॥

पश्याग्रवातायनमेतदेत्य
लताग्रपुष्पाण्यवचिन्वतीनाम्[6] ।
नृपातिभारेण नितम्बिनीनां
विमानरत्नानि पुरो नमन्ति ॥ ३६ ॥

शाखाग्र[7]लग्नासु महातरूणां
विटङ्करत्नद्युतिशृङ्खलासु ।
विलम्बमानैरिव[8] चुम्बितेयम्
इतो विमानैर्मणिपञ्जरश्रीः ॥ ३७ ॥

इमाः समं प्राणसमैर्वनेऽस्मिन्
सर्वर्तुलक्ष्मीनिबिडोपगूढे ।

---

१. Tr. reads लिखन्ति and in the margin लगन्ति both for लुठन्ति. २. K. and T. read °द्यताङ्ग्यः for °द्यताभ्यः. ३. K. reads संलभन्ते for संरभन्ते. ४. K. reads लोल° for लीन°. ५. T. reads मुक्तानि तानीव for उत्तानितानीव. ६. B. reads °पुष्पाण्यधिचिन्वतीनाम्, K. °पुष्पाणि विचिन्वतीनाम् and Tr. °पुष्पाण्यपचिन्वतीनाम् all for °पुष्पाण्यवचिन्वतीनाम्. ७. T. reads शिखाग्र° for शाखाग्र°. ८. K. reads विलम्ब्यमानैः for विलम्बमानैः.

नभःस्थिता एव नरेन्द्र पश्य
पुष्पोच्चये लोलदृशः प्रवृत्ताः ॥ ३८ ॥

एताः करैः काञ्चनपद्मगौरैर्
विलासवत्यः सनिबन्धनानि ।
हरन्ति पुष्पाणि महीरुहाणाम्
मृदूनि यूनामिव मानसानि ॥ ३९ ॥

आसां लताग्रस्तबकोत्थितानि
शिखण्डरत्नद्युतिचुम्बितानि ।
पश्योपरिष्टादलिमण्डलानि
नीलातपत्रभ्रममारभन्ते ॥ ४० ॥

मुञ्चत्यलिः[4] पुष्पलतामितोऽयम्
आघ्रातरामामुखपद्मगन्धः ।
गुणप्रकर्षे हि सदा मनांसि
गुणान्तरज्ञानवतां रमन्ते[5] ॥ ४१ ॥

लतैतया चूततरोः सलीलम्
आनीयमाना नतिमानताङ्ग्या ।
पश्योत्पतत्पुष्पशिलीमुखेयम्[6]
आभाति कन्दर्पधनुर्लतेव ॥ ४२ ॥

भ्रमद्द्विरेफावलिलोलदृष्टिर्
लीलावतंसक्रिययोन्मुखानि ।

१. Tr. mutilates two letters at the beginning, but the copyist substitutes रथ° for नभः°; while T. reads °येव for एव. २. Tr. mutilates three letters after करैः and reads °पद्मरागैः for °पद्मगौरैर्; while K. reads °पद्म° for °पद्म°. ३. B. reads चूडाग्र° for शिखण्ड°. ४. B. reads मुञ्चत्ययं for मुञ्चत्यलिः. ५. T. reads °मरन्ते for रमन्ते. ६. T. reads °मुखोऽयम् for °मुखेयम्. ७. B. reads °क्रिययोत्सुकानि and I. °क्रिययोत्सुकानि both for °क्रिययोन्मुखानि; while Tr. mutilates three letters before मुखानि.

विचेतुमेषा कुसुमानि नालं
तरोस्तनालिङ्गनदोहदस्य ॥ ४३ ॥

प्रियार्पितैः कान्तनिपीतमुक्तैः
पुरन्ध्रिबिम्बाधरकान्तिचौरः ।
अस्याः सरत्नत्विषि कर्णपाशे
किमप्यशोकस्तबकश्चकास्ति ॥ ४४ ॥

अस्या लताक्षेपविसूत्रितस्य
हारस्य लग्नस्तनकुङ्कुमस्य ।
भ्रष्टाः क्षितौ दाडिमबीजमोहात्
आक्षिप्य मुक्ताः कपयः क्षिपन्ति ॥ ४५ ॥

निदाघलक्ष्मीहसितच्छटेयम्
पर्याप्तकृष्णागरुधूमगन्धे ।
बन्धे कचानां नवमल्लिकाऽस्याः
पश्यालिनीले परिभागमेति ॥ ४६ ॥

असावितः पार्थिव दन्तपत्रम्
आपास्य हंसच्छदपाण्डु बाला ।
करोति कर्णे नवकर्णिकारम्
उत्तापिताष्टापदरत्नशोभि ॥ ४७ ॥

स्थितोऽयमन्तर्नवपल्लवानाम्
प्रवालताम्राङ्गुलिरायताक्ष्याः ।

१. Tr. reads कृतास्पदः for प्रियार्पितः. २. T. and I. read °मुक्तः for °मुक्तैः ३. Tr. reads °प्रभेयम् and T. °च्छदेयम् both for °च्छटेयम्. ४. Tr. reads °कालागरुधूप° and T. °कृष्णागरुधूप° both for °कृष्णागरुधूम°; while I. reads °गन्धैः for °गन्धे. ५. B. reads °नीले° and T. °नीरे for °नीले, but the former in the margin °नीले ; while T. and Tr. read पर° for परि°. ६. T. reads उत्तानिता° for उत्तापिता°.

व्यक्तिं शरच्चन्द्रकरोज्ज्वलाभिर्
[1]नखांशुरेखाभिरिनः प्रयाति ॥ ४८ ॥

धावत्करा कर्णशिरीषलोभात्[2]
इतस्ततः सम्पतति द्विरेफे ।
क्रीडामिव व्याकुलदृष्टिपाता
बालेयमभ्यस्यति कन्दुकस्य[3] ॥ ४९ ॥

प्रावृड्विलासस्मितमुद्वहन्ती
कर्णे नवं केतकबर्हमेषा ।
प्रियावतंसीकृतचन्द्रलेखा
चकास्ति कन्येव हिमाचलस्य[4] ॥ ५० ॥

विलोकितालेख्यकपोलभागात्[5]
प्लवङ्गशावेऽधिगते विमानम्[6] ।
इतः कदम्बादनिवृत्तहस्तम्[7]
आस्ते भयादालिखितेव तन्वी ॥ ५१ ॥

पुष्पाणि चिन्वत्यतिमुक्तकस्य
पश्य श्लथं केशकलापमेषा[8] ।
अंसे बिभर्तीव तमालनीलं
विलासवालव्यजनं स्मरस्य ॥ ५२ ॥

विमुञ्चती चक्षुषि[9] पुष्पधूलिम्
एषा गते तम्प्रति[10] वल्लभस्य ।

---

१. K. reads नवांशु° for नखांशु°. २. T. reads °शोभात् for °लोभात्. ३. B. raeds कार्मुकस्य for कन्दुकस्य. ४. T. reads हिमालयस्य for हिमाचलस्य. ५. I. reads °ताभात् and T. °ताभात् both for °भागात्. ६. K. reads ऽभिमानम् for विमानम्. ७. T. reads कथं वाहनिवर्त° and Tr. कथं वाहनिवृत्त° both for कदम्बादनिवृत्त°. ८. B. reads °पलाश° for °कलाप°. ९. K. and Tr. read पश्यति for चक्षुषि. १०. T. and Tr. read साम्प्रति वल्लभेऽस्याः for तम्प्रति वल्लभस्य.

चित्रं झटित्यश्रुलवावकीर्णे
दृशौ सपत्न्याः कलुषीकरोति ॥ ५३ ॥

मध्यच्युते बिभ्रति किंशुकेऽस्मिन्
अलारुणस्याकृतिमङ्कुशस्य ।
अस्यास्तनाभ्यामधुना धृतेयम्
अनङ्गमत्तद्विपकुम्भलक्ष्मीः ॥ ५४ ॥

अभ्यागतायाः सहसाऽमुनाऽस्याः
कन्दर्पसाम्राज्यधुरोद्वहेन ।
सुगन्धिभिः पाटलिपादपेन
पुष्पैरितः कल्पितमातिथेयम् ॥ ५५ ॥

आर्द्रागसेयं गमिता प्रसादं
कृतप्रणामाञ्जलिना प्रियेण ।
प्रमृष्टबाष्पा सुमुखी नखाभ्यां
चूताङ्कुरं मानमिवोच्छिनत्ति ॥ ५६ ॥

अध्यासते कामपि कान्तिमासाम्
एते सकुन्दाः कबरीकलापाः ।
कुमुद्वतीकान्तकरानुविद्धास्
तमःप्रताना इव यामिनीनाम् ॥ ५७ ॥

पुष्पाणि नानाविधवर्णभाञ्जि
विमानवातायनतो विचित्य ।

---

१. Tr. reads °मेशुकस्य for °मङ्कुशस्य. २. I. reads ऽमुनाऽऽभ्यां for ऽमुनाऽस्याः. ३. B. reads °पुरःसरेण and K. °धुरन्धरेण for °धुरोद्वहेन. ४. B. and Tr. read पाटल° for पाटलि°. ५. B. reads कृता for कृत°. ६. T and I. read °बाष्पान्धमुखी for °बाष्पा सुमुखी. ७. T. reads अभ्यासते for अध्यासते. ८. T. reads सकुन्ताः for सकुन्दाः. ९. Tr. reads तमप्रताना and corrects घनप्रतानाः for तमःप्रताना.

युवायमिन्द्रा[1]युधवर्णकान्तम्  
उत्तंसमस्याः सुदृशः करोति ॥ ५८ ॥

पर्य्येयमुद्बाहुलताऽहितश्रीर्  
मध्येन नश्यत्त्रिवली लते[2]व ।  
विमानतः कोमलमुच्चिनोति  
वधूर्मधूकं स्वकपोलका[3]न्ति ॥ ५९ ॥

अदः सुगन्धीकुरु मत्प्रसूनम्  
मुखाब्जसौगन्ध्यकणार्पणेन ।  
इ[4]त्यञ्जलासक्तलतो न याञ्चाम्  
अस्याः करोतीव स[5] कर्णिकारः ॥ ६० ॥

तथा न चू[6]ते नवमञ्जरीयम्  
अवाप्तवत्यात्मगुणप्रकर्षम् ।  
अस्याः सकालागरुपत्रलेखे  
यथा कपोले कमलेक्षणायाः ॥ ६१ ॥

वहत्यशोको ऽयममर्त्यकान्ता-  
पादाहतः का[7]न्तमलक्तकाङ्कम् ।  
कृत्वा जगत्यस्खलितां निजाज्ञाम्  
स्कन्धे[8]ऽर्पितं तूणमिव स्मरेण ॥ ६२ ॥

चिरेण मन्ये बकुलद्रुमोऽयम्  
अवाप्तपा[9]रः स्पृहणीयतायाः ।

---

१. B. and T. read इन्द्रायुधखण्डकान्त° and Tr. इन्द्रायुधखण्डमुग्धम् for इन्द्रायुधवर्णकान्तम्. २. B. and T. read लतेन for लतेव. ३. Tr. reads °कान्तम् for °कान्ति. ४. B. reads इत्यञ्जलीसक्तलतो and in the margin °सक्तलतो for इत्यञ्जलासक्तलतो and °सक्तलतो respectively. ५. Except K. all others read म for स. ६. B. reads शीर्णा for चूते. ७. Tr. reads भास्वन्तम् for कान्तम्. ८. T. mutilates three letters after स्कन्धेऽर्पितं. ९. K. reads °सारः for °पारः.

अर्थी करोऽस्याः सुमनस्सु य[1]स्य
जातो जितामर्त्यतरुप्रवालः ॥ ६३ ॥

फलं शिरीषेण चिरादवाप्तम्
अस्यास्समग्रं सुकुमारतायाः ।
निरस्य गीर्वाणतरुप्रसूनं
यदेतदुत्तंसितमा[2]यताक्ष्या ॥ ६४ ॥

अस्या[3]ः श्रुतौ चम्पकमादधत्याः
करेण मुक्तावलयाङ्कितेन ।
एष द्विजः स्वस्त्ययनं चिरावैर्
[4]नास्याः करोतीति न मञ्जुकण्ठः ॥ ६५ ॥

विन्यस्तबन्धूकदली मुखेऽस्याः
स्वेदार्द्रकालागरुपत्रवल्ली ।
चकास्ति सन्ध्यातपलेशश[5]ङ्कि
कलङ्कलेखा शशलक्ष्मणीव ॥ ६६ ॥

एता मिथो रुद्धविमानमार्गा[6]
लताग्रजं पुष्पमना[7]प्नुवन्त्यः ।
भवन्ति भारानमिताङ्ककेषु
बद्धाभ्यसूयाः स्तनमण्डलेषु ॥ ६७ ॥

एतानि कान्तैः प्रमदाजनस्य
[8]नवप्रवालान्यवतंसितानि ।

१. K. and T. read यस्याः for यस्य. २. T. reads आयताक्ष्याः for आयताक्ष्या. ३. B. reads पश्य for अस्याः. ४. I. reads यस्याः करोतीव, T. माऽस्याः करोतीव and Tr. नैवं करोतीव all for माऽस्याः करोतीति. ५. B. and I. read °क्लिष्टा and Tr. °लिप्ता° both for °शङ्कि. ६. I. reads° मार्गलताग्रजां for °मार्गा लताग्रजं; while K. लताग्रगं for लताग्रजं. ७. T. and Tr. read °मनाप्नुवत्यः for °मनाप्नुवन्त्यः. ८. T. reads वन° for नव°.

पश्यन्ति पश्य स्वमिवाप्तकान्तिं
कपोलपालीमणिदर्पणेषु ॥ ६८ ॥

यद्यद्वने ऽभूत् कुसुमं सुगन्धि
वधूजनैस्तत्तदितो गृहीतम् ।
कृत्स्नत्रिलोकीविजयावतंसं
निर्मातुमिष्वासमिव स्मरस्य ॥ ६९ ॥

कर्णावतंसीकृतपल्लवानां
विचित्रपुष्पाभरणोज्ज्वलेषु ।
पश्याभितः पल्लवितेयमासाम्
अङ्गेषु सारङ्गदृशामृतुश्रीः ॥ ७० ॥

स्वेदोदबिन्दुच्छलतः कपोले
वितीर्णमुक्तार्घ इव स्मरस्य ।
एणीदृशां कान्त इव प्रवृत्तः
श्रमोऽयमालिङ्गितुमङ्गलेखाम् ॥ ७१ ॥

आसां पृथुस्वेदकणाङ्कितानि
वक्त्राणि नेत्रोत्सवमर्पयन्ति ।
प्रत्युप्तमुक्ताफलदन्तुराणि
हिरण्मयानीव सरोरुहाणि ॥ ७२ ॥

एतानि पश्य च्युतपुष्पधूलि-
व्यालुप्तपक्ष्मावलिसौष्टवानि ।

१. B. reads °कीर्ति कपोल°, T. and I. °क्रान्ति कपोल° for °कान्ति कपोल°; while I. substitutes स° for स्व°. २. T. I. and Tr. read °रतो for °दितो. ३. T. reads कृस्त्नं for कृत्स्न°. ४. T. reads °हरणो° for °भरणो°. ५. Tr. reads कपोलसौवर्ण° for कपोले वितीर्ण° and स्वेदार्द्र° for स्वेदोद°. ६. Tr. reads मुकुलश्रमोऽयमासिविशुमङ्गकानि for प्रवृत्तः श्रमोऽयमालिङ्गितुमङ्गलेखाम्. ७. T. reads प्रत्यात° for प्रत्युप्त°. ८. Tr. reads पश्याच्युतपुष्पमाल्यान्यलुप्तपक्ष्मावलि° for पश्य च्युतपुष्पधूलिव्यालुप्तपक्ष्मावलि° and B. पुष्प° for पश्य. ९. I. reads °पक्ष्मा° for °पक्ष्मा°.

श्रमेण किञ्चिन्मुकुलीभवन्ति
सीमन्तिनीनां नयनोत्पलानि ॥ ७३ ॥

एतासु सीदन्मणिबन्धमूल-
निलीनलीलामणिकङ्कणासु ।
विलोक्यतां व्यक्तिमुपैति खेदो
विद्याधरस्त्रीजनदोर्लतासु ॥ ७४ ॥

अनङ्गकल्पद्रुममञ्जरीणाम्
अमोघमस्त्रं कुसुमायुधस्य ।
भृशं यथा पुष्पमयी विभूषा
नाऽऽसां तथा रत्नमयी विभाति ॥ ७५ ॥

वनान्तमेता वनिता न मोक्तुम्
अनेकपुष्पं नृप शक्नुवन्ति ।
विमुच्यते केन स नाम देशो
यत्रास्ति सान्द्रः सुमनःप्रचारः ॥ ७६ ॥

इत्युज्ज्वले तस्य वचःप्रसूने
नीते ऽपि कर्णातिथितां विहस्य ।
नृपो बभूवास्तमनाः सचित्रं
स्मृताहिराजेन्द्रसुताविलासः ॥ ७७ ॥

पुष्पप्रवालाङ्कुरमण्डलं तत्
क्वणद्विमानावलिहेमघण्टम् ।

---

१. T. reads °कङ्कणेषु for °कङ्कणासु. २. T. has विलोकयता [illegible] विद्या° for विलोकयतां व्यक्तिमुपैति खेदो विद्या°. ३. Tr. reads °अनतालतासु for °अनदोर्लतासु. ३. T. reads भृङ्गः for भृशं. ४. Tr. reads मितान्तसु for न मोक्तुम्. ५. B. substitutes हि for स. ६. Tr. reads वस्य for वच and °प्रसादः for °प्रचारः while T. reads सान्द्रः स्वमनःप्रसादः for सान्द्रः सुमनःप्रचारः and B. सार्द्रः for सान्द्रः. ७. B. T. and Tr. read बभूवास्तमनाः for बभूवास्तमनाः and K. बभूवाविमनाः for the same. ८. T. substitutes °भि° for °हि.° ९. B. reads °मण्डनं for °मण्डलं.

वनं विहायाथ समग्रमग्रे
चचाल विद्याधरराजसैन्यम् ॥ ७८ ॥

गङ्गावर्णनम्।

अथ प्रवालाधरबिम्बचुम्बि-
परिस्फुरत्फेनविलासहासा[1]।
वाचालहंसावलिकाञ्चिदाम-[2]
सनाथतीरोरुनितम्बबिम्बा ॥ ७९ ॥

समीरवेल्लत्तटहेमवल्लि-
लोलप्रभापिञ्जरितोर्मिलेखा[3]।
विलासमज्जत्फणिराजकन्या-
सङ्क्रान्तकान्तस्तनकुङ्कुमेव ॥ ८० ॥

निमग्नदिङ्नागकपोलभित्ति-[4]
सन्ताननिर्यन्मदवेणिकृष्णा[5]
तृतीयनेत्रानलधूमवल्लि-
कलङ्कितेव त्रिपुरान्तकस्य[6] ॥ ८१ ॥

भारानमद्भोगिफणास्थितायाः[7]
स्थलोच्छलद्वीचिचयच्छलेन[8]।
उत्तम्भयन्तीव तले सतर्कम्[9]
अर्कोपलस्तम्भशतानि भूमेः ॥ ८२ ॥

१. T. reads °भासा for °हासा. २. Tr. reads °कान्ति° for °काञ्चि°. ३. T. reads °रेखा for °लेखा. ४. I. reads निमग्नमङ्गाङ्क° for निमग्नदिङ्नाग°. ५. K. reads °कृष्टा for °कृष्णा. ६. Tr. reads स्मरवीरशत्रोः for त्रिपुरान्तकस्य. ७. B. reads °फण° for °फणा°; while T. has °भारानमद्भो- - णिस्थितायाः for भारानमद्भोगिफणास्थितायाः. ८. Tr. reads °लोचलद्वीच्चिपथच्छलेन for °लोच्छलद्वीचिचयच्छलेन. T. also the same, but differs स्थूलो° for स्थलो°. ९. B. reads उत्तम्भयन्ती सरलं सतर्कम् and T. मेत्रं भवन्तीव तलेन तर्कम both for उत्तम्भयन्तीव तले सतर्कं; while Tr. mutilates three letters after तले.

तटोद्गतपांशु तमालराजि-
छायाघनश्यामलितार्धभागा।
मूर्तिस्तुषाराचलतुल्यकान्तिर्
उमापति-श्रीधरयोरिवैका ॥ ८३ ॥

कादम्बचञ्चूद्धृतचक्रवाकी-
परिप्लवव्यक्तमृणालकाण्डा।
चण्डीधवोन्नद्धजटाविटङ्क-
कृष्टेन्दुलेखाङ्कुरदन्तुरेव ॥ ८४॥

तरङ्गभङ्गोज्ज्वलचामरश्रीर्
उद्दण्डहेमाम्बुरुहातपत्रा।
पुण्या पुरो दूरत एव तेन
त्रिमार्गगाऽदृश्यत पार्थिवेन ॥ ८५ ॥

कुलकम्।

तस्यास्तटेऽथ कुसुमावचयश्रमार्त-
सीमन्तिनीनिवहसस्मितवीक्षितायाः।
विद्याधरेण विदधे धवलोर्मिधौत-
पर्यन्तहेमसिकते पृतनानिवेशैः ॥ ८६ ॥

---

१. B. T. and Tr. read तुषाराञ्जन° for तुषाराचल°. २. B. and T. read °वारि° for °वाकी°. ३. Tr. mutilates this line :—

-पारिप्लवव्यक्तमृणालकाण्डा ।.

४. T. reads °कपोत° for °मृणाल°. ५. T. reads चण्डीव चोन्नद्ध° and Tr. चण्डीशसन्नद्ध° both for चण्डीधवोन्नद्ध°. ६. T. reads °रेखा° for °लेखा°; whilie B. reads °लेखाङ्करदन्तुरेव for °लेखाङ्कुरदन्तुरेव. ७. Tr. does not insert this. ८. B. reads सुकुमारवपुः श्रमान्त° and T. and Tr. कुसुमापचयश्रमार्त° for कुसुमावचयश्रमार्त°. ९. B. reads °सस्पृहवीक्षितायाः for °सस्मितवीक्षितायाः. १०. B. reads °विशेष: and in the margin °निवेशः for °निवेशः.

तदनु पुलिने सद्यो विद्याधरैः परिकल्पितं
नृपतिरविशल्लीलागारं स साहसलाञ्छनः।
भ्रममजनयन्नेत्रोत्कीर्णा इति प्रतिबिम्बिताः
सितमणिमये यस्मिन्नन्तर्बहिश्च मृगीदृशः॥ ८७॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पातालावलोकनो नाम चतुर्दशः सर्गः॥ १४॥

---

१. B. reads स्मित° for सित°. २. I. and Tr. read परिमलस्य नवसाहसाङ्कचरिते; while I. पातालगङ्गावगाहनश्चतुर्दशः सर्गः and T. परिमलकालिदासकृतौ नवसाहसाङ्कचरिते महाकाव्ये and B. only चतुर्दशः सर्गः.

# अथ पञ्चदशः सर्गः ।

## जलक्रीडावर्णनम् ।

अथ सान्द्रघर्मजलबिन्दु-
लुलिततिलकः प्रचक्रमे ।
हेमकमलसुभगे सरितः
सलिले निमङ्क्तुमसितेक्षणाजनः ॥ १ ॥

श्रममेत्य[1] मुञ्चत मदम्बु-
रभस[2]परिरम्भलीलया ।
एवमवददिव दीर्घदृशः
कलहंसयूथनिनदेन[3] जाह्नवी ॥ २ ॥

मरुतावधूतकलधौत-
कमलमकरन्दगन्धिना[4] ।
ऊर्मिदलनशिशिरेण बलात्
अबलाजनस्य नुनुदे परिश्रमः[5] ॥ ३ ॥

परिविद्धरेखमधितीर-
विरचितपदे वधूजने ।
कान्तिमुदवहदमर्त्यसरित्
तटरूढकाञ्चनलतेव काञ्चन ॥ ४ ॥

---

१. I. reads श्रेममेत मुञ्चत, Tr. श्रममङ्गः मुञ्चत and T. श्रमते मदमुञ्चत all for श्रममेत्य मुञ्चत. २. T. reads °हहस° for °रभस°. ३. T. reads °विरुतेन for °निनदेन. ४. T. reads °बन्धुना for °गन्धिना. ५. T. reads परिश्रमम् for परिश्रमः.

सितचक्षुषामसितरत्न-
रुचिमुषि मृणालिनीदले ।
स्थूलजललवनिभेन दधे
नवमौक्तिकार्घ इव जह्नुकन्यया ॥ ५ ॥

उदितत्रपा इव विलास-
मसृणगमनेन सुभ्रुवाम् ।
जग्मुरमरसरितः पुलिनं
सहसा विहाय कलहंसपङ्क्तयः ॥ ६ ॥

धवलाभ्रकच्छुरितभित्ति-
लिखितललिताङ्गनालिपिम् ।
अप्सु कुवलयदृशां प्रतिमाः
सितरत्नदर्पणनिभासु लेभिरे ॥ ७ ॥

अथ वल्लभार्पितकराग्र-
निहितनिजपाणिपल्लवाः ।
वारिविकचकनकाब्जरजः-
कपिशोर्मिमालमबला जगाहिरे ॥ ८ ॥

सुदृशां निमज्ज्य सुरसिन्धु-
पयांसि नियमस्थितैरिव ।
ऊर्मितरलितमयूखशिखैर्
मणिनूपुरैस्सपदि मौनमाददे ॥ ९ ॥

कुचलुप्तपत्रलतयाऽथ
विगलितविसूत्रहारया ।

१. T. reads °कर्बुरित° for °कच्छुरित°. २. Tr. reads °भियम् for °लिपिम्. ३. Tr. reads कपिलोर्मि° for कपिशोर्मि°. ४. T. reads °लिप्त° for °लुप्त°. ५. Tr. reads धवलित° for विगलित°.

प्रापि रतिरमणविलासतुला
ललितभ्रुवां जलविहारलीलया ॥ १० ॥

नवकुङ्कुमारुणपुरन्ध्रि-
कुचकलशताडितं पयः ।
रागमभजत न कस्य भवेत्
सुलभाङ्गखेलदबलस्य विक्रिया ॥ ११ ॥

विकिरन् विहस्य मणिशृङ्ग-
धृतमुदकमेत्य पृष्ठतः ।
साचिमुकुलितदृशा ददृशे
दयितो मुहुर्वलितकण्ठमेकया ॥ १२ ॥

परिणाहवत्कुचनिषिद्ध-
करणवलनोल्कदोर्लतम् ।
लोलमुखरमणिकङ्कणया
विधदे जले मुरजवाद्यमन्यया ॥ १३ ॥

हरिणीदृशो हृतपुरन्ध्रि-
कुचकलशकुङ्कुमाङ्किता ।
क्षिप्रमधिजघनमूर्मिलता
शिथिलेव हेमरशना विदिद्युते ॥ १४ ॥

सलिलं किरन्तमवलोक्य
रमणमपराङ्गनामुखे ।

---

१. Tr. reads °वेलदबलस्य for °खेलदबलस्य. २. B. reads सापि for प्रापि. ३. T. reads °हलनोल्क° for °वलनोल्क°; while Tr. mutilates one letter after वलनो. ४. B. and T. read एकया, but B. in the margin अन्यया. ५. T. reads °कुङ्कुमारुणा for °कुङ्कुमाङ्किता.

चित्रमविरलधृताश्रुलवे
निमिमील काचिदबला विलोचने ॥ १५ ॥

द्रुतमत्रुटत् विबुधसिन्धु-
निबिडलहरीकराहतम् ।
हारवलयमरविन्ददृशाम्
कुशलं कुतोऽस्ति गुणिनां जडान्तरे ॥ १६ ॥

शुशुभे कयापि करयन्त्र-
निहितशुचिवारिधारया ।
मुक्तसितकुसुमसायकया
मकराङ्कचापलतयेव बालया ॥ १७ ॥

परिवेषविभ्रमनिवेशि-
मनसिजतुषारदीधितेः ।
कोऽपि करकिसलये कमिता
विदधे मृणालवलयं मृगीदृशः ॥ १८ ॥

हृदयेशमुक्तजलधौत-
मलयजविलेपनैर्ह्रिया ।
लक्ष्यनवनखपदावपरा
नलिनीदलेन पिदधे पयोधरौ ॥ १९ ॥

---

१. Tr. reads क्षिप्र° for चित्र°. २. Tr. reads त्रुटितं द्रुतं for द्रुतमत्रुटत्. ३. Tr. reads नियतं कुतोऽस्ति गुणिता जडान्वये for कुशलं कुतोऽस्ति गुणिनां जडान्तरे. T. follows this reading, but omits first three letters; while I. reads जडान्वये for जडान्तरे. ४. T. reads कलापि for कयापि. ५. T. substitutes °चापलतया for °चापलतयेव बालया omitting four letters. ६. Tr. reads ऽथ तदा for कमिता. ७. Tr. reads °दृशाः for °दृशः. ८. B. does not insert the following :—

लक्ष्यनवनखपदावपरा
नलिनीदलेन पिदधे पयोधरौ ॥ १९ ॥
अभितोऽङ्कमाशुखमृगाङ्कम्
उडुनिकरकान्तिमादधे ।

१. T. reads विदधे परौ for पिदधे पयोधरौ.

अभितोऽङ्गनामुखमृगाङ्कम्
उडुनिकरकान्तिमादद्दे ।
केलितरलतरुणीनिबिड-
स्तनताडिते पयसि बुद्बुदोत्करः ॥ २० ॥

विदधे वधूर्निजकराग्र-
गलितमणिकङ्कणाङ्किते ।
मेघशकल इव सेन्द्रधनुर्
वलयोदरे नयनमब्जिनीदले ॥ २१ ॥

असिताञ्जनाङ्कमभिजात-
कुवलयदृशां दृशोऽन्तरात् ।
[4]नीरमहृत नहि शुद्धिमतां
[5]तटवृत्तिराश्रितकलङ्कमार्जने ॥ २२ ॥

[6]तरलोर्मिलङ्घितनितम्ब-
फलकलुलिताच्छवाससः ।
फेनपटलमसिताब्जदृशः
क्षणमेकमंशुकविलासमाददे ॥ २३ ॥

सुदृशः स्फुटं नवनखाङ्कम्
उरसिजलधौतकुङ्कुमे ।
[9]कान्तनिहितनयनं पिदधे
पृथुहारतारतरलांशुपल्लवः ॥ २४ ॥

---

१. Tr. reads °मादधे for °माददे. २. Tr. reads मिदधे for विदधे. ३. B reads मलिनम् for नयनम्. ४. B. reads तीरम्; but in the margin नीरम्; whil Tr. mutilates six letters after नीरमहृत in this line. ५. Tr. mutilates fir four letters in this line. ६. B. reads सरलो° for तरलो°. ७. Tr. reads °लुलितार्द्र° for °लुलिताच्छ°. ८. Tr. reads °बलव° for °पटल°. ९ The manuscript Tr. ends with the क in this line, the remaining portion to the end being lost.

लुलिताञ्जनस्य नयनस्य
सहभुवमिवेक्षितुं श्रियम् ।
लग्नजल[1]सरलितैरलकैर्
लुलुठे ललाटतटसीम्नि सुभ्रुवः ॥ २५ ॥

दधतीव कापि रुचिमाप
मनसिजविलासवल्लकीम् ।
अंसविनिहितमृणाललता-
तलवर्त्यलाबुपरिवर्तुलस्तनी ॥ २६ ॥

सलिलाहतित्रुटितहार-
परिगलितमौक्तिक[2]भ्रमात् ।
मुग्धयुवतिरपरा नि[3]दधे
दृशमब्जिनीदलपुटोदबिन्दुषु ॥ २७ ॥

धवलोदरै[4]र्भयवशेन
तरलवलितैर्विलोचनैः ।
नीलनलिन[5]दलदामदृशां
शफरैस्समं सुचिरमप्सु बभ्रमे ॥ २८ ॥

गलिताङ्गदा गुरुतरङ्ग-
दलितमणिकर्णपूरकाः ।
स्रस्तकनकवलयाः सुदृशः
श्लथ[6]बन्धरत्नरशनाश्चकाशिरे ॥ २९ ॥

---

१. T. reads °सुरलितैर्लुलिते for °सरलितैरलकैर् लुलुठे. २. B. reads °भ्रमा and K. °क्रमात् both for °भ्रमात्. ३. I. reads पिदधे for निदधे. the letter पि is not clear. ४. B. reads वशभयेन for भयवशेन. ५. B. omits °दल° and substitutes °धाम° for °दाम°. ६. B. and T. read °लम्ब° for °बन्ध°.

अतिकम्पमूर्मिकुटिलभ्रु[1]
बहलनवकुङ्कुमारुणम् ।
स्त्रैणकरतलनिरस्तमभूत्
उपजातकोपमिव जाह्नवीजलम् ॥ ३० ॥

अकरोत् पदं पृथुनितम्ब-
विलुलितजलार्द्रवेणिषु ।
नीरलवशबलगण्डतला-
स्वबलासु कुण्डलित[2]कार्मुकः स्मरः ॥ ३१ ॥

च्युतरत्नभूषणमरीचि-
रचितसुरचापमण्डलम् ।
केशकुसुमशबलं शुशुभे
सुदृशामनङ्गमददीपनं पयः ॥ ३२ ॥

अथ ताभिरेकतपनीय-
सरसिजसनाथपाणिभिः ।
श्रीभिरिव सं[3]मुदतारि ततः
पुनरुक्तचाटुपटुभिः प्रियैस्सह ॥ ३३ ॥

स[4]जलांशुकान्तिविशदाङ्ग-
जनितनिबिडत्रपाकुलाः ।
व्यक्तनवनखपदाभरणाः
प्रियलोचनान्यरमयन् मृगीदृशः ॥ ३४ ॥

---

१. T. reads अभिगम्यमूर्तिकुटिल° for अतिकम्पमूर्मिकुटिलभ्रु; while B. adds श्री after भ्रु. २. B. reads °मुकुलित° for °कुण्डलित° and T. °स्वकुण्डलित° for °सुकुण्डलित°. ३. B. reads समुदितारि, but in the margin समुदतारि; while I. समुदताधि (धि ?) for the same. ४. B. reads सजलांशुकारिभिषदाङ्ग° and I. सजलांशुकातिविषदाङ्ग° for सजलांशुकान्तिविशदाङ्ग°.

अथ ता गृहीतशारदिन्दु-
धवलसिचया[1]ः प्रसाधनाम् ।
चक्षुरधिवपुरमर्त्यसरित्-
पुलिनस्थली[2]कनकवल्लिधामसु ॥ ३५ ॥

तिलकाङ्किता[3]ः प्रचुरपुष्प-
परिमलमुचो मृगीदृशः ।
[4]ऊढनवललितपत्रलता
दधुरङ्गजोपवनराजिविभ्रमम् ॥ ३६ ॥

न चिरादलङ्कृतिविशेष-
विहितरुचयोऽतिपेशलाः ।
लक्ष्यनवनवरसाः शुचयः
[5]कविपुङ्गवोक्तय इवाङ्गना बभुः ॥ ३७ ॥

वहति स्म निर्मलकपोल-
लिखितमृगनाभिपत्रकम् ।
कापि निभृतमधुपावलिमत्
कलधौतकोकनदकान्तमाननम् ॥ ३८ ॥

अधिकर्णमुद्गतमयूख-
मरकतमनोहरोदरम् ।
बालमिव मदनकल्पतरोर्
दलमेकया कनकपत्रमाददे[6] ॥ ३९ ॥

---

१. T. reads °निश्चयाः and B. °सिचयः for °सिचयाः: while T. substitutes प्रसाधनाः for प्रसाधनाम्. २. T. reads °कनकस्थलीपुलिनवल्लि° for °पुलिनस्थलीकनकवल्लि°. ३. T. reads तिलकाङ्कितां for तिलकाङ्किताः. ४. T. reads रूढ° for ऊढ°. ५. T. reads कपि° for कवि°. ६. I. reads आबधे for आददे.

धृतयावकाङ्कमपि कान्त-
वदनपरिचुम्बनोचिते ।
रागमधररुचके निदधे
दयिते च काचन चकोरलोचना[1] ॥ ४० ॥

हरिणाङ्कसुन्दरमनेक-
विशदगुणगुम्फिताकृतिम् ।
हारमवहदपरा न परं[2]
हृदि कान्तमप्यसमबाणदीपनम् ॥ ४१ ॥

इतरा पदाङ्कमिव मत्त-
मदनकरिणोलिकोदरे ।
सान्द्रमृगमदमषीरचितं
तिलकं कुरङ्गतिलकानना दधे ॥ ४२ ॥

हृतसुम[3]हेमशतपत्र-
रुचिमुकुलिताङ्गुलीदले ।
काचिदितरकरसङ्कुटितं[4]
निदधे विलासमणिकङ्कणं करे ॥ ४३ ॥

उदितासु काञ्चिगुणमध्य-
मरकतमरीचिसूचिषु ।
व्यक्तिमलभत न रोमलता
स्मरदीपकज्जलशिखा मृगीदृशाम्[5] ॥ ४४ ॥

---

१. B. reads °चक्षुषि for °लोचना. २. T. reads परा for परं. ३. I. omits °सुम°; while T. substitutes °चारु° for °सुम°. ४. T. reads °सम्फुटितं for °सङ्कुटितं. ५. K. reads °दृशः for °दृशाम्.

सरसागसेव रमणेन
चरणनलिनानुषङ्गिणा[1] ।
पुष्पशरतरलिता दधिरे[2]
मणिनूपुरेण मृगलोचना रुचिम् ॥ ४५ ॥

दधतीभिरिन्दुकरजाल-
शबलतिमिरोर्मिविभ्रमम् ।
ऊढ[3]धवलकुसुमाभिरलं
कबरीलताभिरबलाश्चकाशिरे ॥ ४६ ॥

प्रियपाणिपङ्कजधृतेषु
सकलशशिबिम्बबन्धुषु ।
वक्त्रकमलमविलोलदृशो
मणिदर्पणेषु ददृशुः पुरन्ध्रयः ॥ ४७ ॥

प्रकटं दधज्झटिति रागम्
अलघुमथ वारुणीम्प्रति ।
कान्तिनिकर इव तिग्मरुचेर्
वनिताजनोऽभिमुखतां समाददे[4] ॥ ४८ ॥

उदियाय मानतिमिरौघ-
विघटनपटुर्मनोम्बरे ।
बालकुवलयदृशां विशदे
शनकैर्मनोभवकुरङ्गलांछनः ॥ ४९ ॥

अरुणाङ्गुलीदलनिरुद्ध-
नवकनककोशकर्णिकैः ।

---

१. B. reads °षङ्गिना for °षङ्गिणा. २. T. reads °दधिरोमणि for दधिरे मणि°. ३. T. reads रूढ° for ऊढ°. ४. B. reads समादधे for समाददे.

सान्द्रमधुपरिमलैरुरुचे
करपङ्कजैरथ चकोरचक्षुषाम् ॥ ५० ॥

मणिशुक्तिषु क्षणमुपोढ-
कुवलयसुगन्धिसीधुषु ।
न्यस्यदसमशरयन्त्रमिव
भ्रमतिस्म भृङ्गकुलमुत्सुकोत्सुकम् ॥ ५१ ॥

रुरुचे ऽलिमण्डलमुदंशु-
कनकचषकोपरि स्थितम् ।
एकमिव रतिपतेरुदितं
तपनीयदण्डमसितोऽणवारणम् ॥ ५२ ॥

विधृता करे प्रियतमेन
कतिपयशिलीमुखान्विता ।
चित्तमकृत विवशं सुदृशां
कुसुमेषुकार्मुकलतेव वारुणी ॥ ५३ ॥

अतिरागिणि प्रणयिनीव
मधुनि परिचुम्बितानने ।
व्यक्तिमलभत मदो हृदये
पुलकः कपोलफलके च सुभ्रुवाम् ॥ ५४ ॥

प्रतिमागतेन्दुकरजाल-
धवलितमिव श्रियं दधे ।

---

१. B. reads सार्द्र° for सान्द्र°. २. K. reads °सुगन्ध° for °सुगन्धि°; while I. substitutes °सिन्धुषु for °सीधुषु. ३. B. reads °मन्त्र° for °यन्त्र°; while I. substitutes न्त्र for न्त्र. ४. T. reads रुचिरे for रुरुचे. ५. B. reads °न्विताम् for °न्विता. ६. K. reads चित्रम् for चित्तम्. ७. B. and I. read पुलकं for पुलकः. ८. T. reads दधते for दधे.

पा[1]ननमितमुखमुग्धवधू-
विगलद्विलासह[2]सितच्छटं मधु ॥ ५५ ॥

मे[3]धु कापि पाटलकपोल-
तरलकलधौतकुण्डला ।
लोलनिजमुखतुषारकर-
प्रतिबिम्बगर्भ[4]मभिकार्पितं पपौ ॥ ५६ ॥

[5]अतिरक्तमायततरेण
विलसदसितोत्पलश्रिया ।
काममपिबदपरेन्दुमुखी
चषकेण सीधु, नयनेन वल्लभम् ॥ ५७ ॥

अगमत् त्रयस्य सममेव
परिमलरसज्ञतामलिः[6] ।
कल्पविटपिमधुनः प्रमदा-
मुखमारुतस्य विकचोत्पलस्य च[7] ॥ ५८ ॥

अधराग्रचुम्बनमवाप्य
कमलदलदीर्घचक्षुषाम् ।
श्वासतर[8]लमजनिष्ट मुदा
मुहुरात्तलास्यमिव कापि[9]शायनम् ॥ ५९ ॥

---

१. B. reads पारि° for पान°; while I. reads परि° for the same. २. T. reads °भसित° for °हसित°. ३. B. and K. do not insert the following:—

मधु कापि पाटलकपोल-
तरलकलधौतकुण्डला ।
लोलनिजमुखतुषारकर-
प्रतिबिम्बगर्भमभिकार्पितं पपौ ॥ ५६ ॥.

४. T. reads °मधिकापि for °मभिकार्पि°. ५. This stanza is given in the margin in I. ६. T. and I. read अली for अलिः. ७. T. does not insert च. ८. T. has - - - सतरल°, but there is the want of only one letter. ९. I. reads °सा° for °शा°; while T. °शायिनम् for °शायनम्.

मदमासवेन रमणेन
नखपदमिवार्पितं हृदि।
नातिविशदपदबन्धमथो
नवसाहसाङ्कचरितं जगुः स्त्रियः॥ ६०॥

मदिरार्पिताधरदलेन
युवतिरमृतच्छटोपमा।
प्रेमरसमृदुषु दीर्घदृशां
हृदयेषु पल्लवयतिस्म मन्मथम्॥ ६१॥

दयिताहिते युवजनेन
विलसदतिपाटलद्युतौ।
कामसुहृदि विहितः प्रणयः
प्रथमं मधुन्यधरपल्लवे ततः॥ ६२॥

अवधूतमानमधुपान-
रसरभसतः प्रसन्नताम्।
प्रापुरतिपृथुदृशां सहसा
हृदयानि चाऽच्छमणिभाजनानि च॥ ६३॥

दयितामनङ्गमदसूतिम्
असितनलिनावतंसकाम्।

---

१. B. and K. read सम° for मद°. २. B. and T. read युवभि° for युवति°; while T. °च्छदो° for °च्छटो°. ३. B. reads दयितार्पितो, K. दयितापिते and T. दयितायुतो all for दयिताहिते. ४. K. reads पुनः for ततः. ५. K. reads °लतां for °दृशां and T. °दशां for the same. ६. B. does not insert the following stanza:—

दयितामनङ्गमदसूतिम्
असितनलिनावतंसकाम्।
सान्द्ररुचियुवजनो मदिराम्
परिचुम्बतिस्म न परं वधूमपि॥ ६४॥.

सान्द्ररुचियुवजनो मदिराम्
परिचुम्बतिस्म न परं[1] वधूमपि ॥ ६४ ॥

[2]अनयन् सहैव शिथिलत्वम्
उभयमुभयेन योषिताम् ।
व्रीडमरुणरुचिना मधुना
मणिकाञ्चिदाम च करेण कामिनः ॥ ६५ ॥

सुदृशां मदादथ परिस्रुद्
अरुणितसितोदरा[3]ः करात् ।
पेतुरमरसरितः पुलिने
मणिशुक्तयः[4] प्रियतमे च दृष्टयः ॥ ६६ ॥

नवपल्लवारुणमुवाह[5]
धूनतरुणवारुणीमदः ।
रागमथ[6] शुचिनि गण्डतले
नयनोदरे च मदिरेक्षणाजनः ॥ ६७ ॥

अपरिस्फुटो[7]क्तिललितासु
मदमुकुलदीर्घदृष्टिषु ।
तासु शबलकुसुमांसलसत्-
कबरीलतासु पदमादधे[8] स्मरः ॥ ६८ ॥

आपानभूरवसितासवरागदीर्घ-[9]
सेन्दीवरस्फटिकशुक्तिशता चकासे[10] ।

१. T. reads वरं for परं. २. B. reads अनयत् सहसैव for अनयन सहैव; while T. substitutes अनयत् for अनयन्. ३. I. reads °दरा करान, T. °दरा करान and K. °दराः करान् all for °दराः करात्. ४. K. reads °मुक्तय for °शुक्तयः. ५. T. reads °मुच्चा for °मुवाह. ६. K. and T. read °मति° for °मथ. ७. T. reads °स्फुटोक्त° for °स्फुटोक्ति°. ८. B. and K. read आदधे for आदधे. ९. T. reads °नवरागदिव्य° for °सवरागदीर्घ°. १०. B. in the margin, and T. reads चकाशे for चकासे.

कौतूहलान्मदविलोलवधूविलास-
व्यालोकनोन्मिषितवक्त्रपरम्परेव ॥ ६९ ॥

अविरलमणिदीपोद्द्योतदूरापसर्पत्-
तिमिरममरसिन्धोः कूलकच्छं प्रविश्य।
अथ सममसुनाथैस्ताः सलीलं निषेदुस्
सरसकनकजम्बूपल्लवप्रस्तरेषु ॥ ७० ॥

सान्द्रोन्मीलत्सौरभाण्युद्वहन्त्यो
विद्युल्लेखापिङ्गलान्यङ्गकानि।
लक्ष्मीं हेमाम्भोजमाला इवापुः
सारङ्गाक्ष्यः प्रेयसां कण्ठलग्नाः ॥ ७१ ॥

ततो विसूत्रच्युतहारयष्टिः
शीर्णाङ्गदो भङ्गुरकर्णपूरः।
मदेन सद्यो मदिरेक्षणानां
रतोत्सवः पल्लवितो बभूव ॥ ७२ ॥

नानाङ्गरागशबले श्लथबन्धलोल-
धम्मिल्लमाल्यकुसुमप्रकरावकीर्णे।
पुष्पेषुतल्प इव वक्षसि वल्लभानां
निद्रामवापुरथ ताः सुरतश्रमेण ॥ ७३ ॥

कन्दर्पस्य त्रिलोकीहठविजयमहासाहसोत्साहहेतुर्
धुन्वंस्तत्पक्ष्मधूलिव्यतिकरकपिशः काञ्चनाम्भोरुहाणि।

१. B. reads °नेत्र° and K. °चक्षु° for °वक्त्र°. २. T. and I. read °दीप° for °दीपो°. ३. B. reads प्रवेश्य for प्रविश्य. ४. T. reads °पिङ्गकानि for °पिङ्गलानि. ५. B. and K. read °मिवापुः for इवापुः. ६. B. reads मध्वेन for मदेन. ७. T. reads पल्लवानां for वल्लभानां. ८. B. reads °विजयमह°, T. °हरविजय° and K. °नवविजय° for °हठविजय°. ९. T. reads °हेतुम् for °हेतुर्. १०. B. reads °चूलि° for °धूलि°.

तन्वानस्तीररू[1]ढत्रिदशतरुलतालास्यमालस्यभोजां[2]
तासां सम्भोगकेलिक्लमभरमहरज्जाह्नवीवीचि[3]वातः ॥७४॥

इति श्रीमृगाङ्कदत्तसूनोः प[4]रिमलापरनाम्नः पद्मगुप्तस्य[5] कृतौ नवसाहसाङ्कचरिते महाकाव्ये पातालगङ्गावगाहनो नाम पञ्चदशः सर्गः ॥ १५ ॥

---

१. T. reads °कूट° for °रूढ°. २. I. reads °भाजः for °भाजां. ३. K. reads °कच्छ° for °वीचि°. ४. I. has परिमलस्य नवसाहसाङ्कचरिते पातालगङ्गावगाहनः and T. श्रीपरिमलकालिदासकृतौ साहसाङ्कचरिते for श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पातालगङ्गावगाहनो नाम.

# अथ षोडशः सर्गः ।

## पाटलागमनम् ।

अत्रान्तरे नभस्सिन्धुपुलिनं प्राप पाटला ।
दधत्यनङ्गलेखेन लाञ्छितं [1]पाणिपल्लवम् ॥ १ ॥

मणिप्रग्रीवकोद्गीर्णशुनासीरशरासनम् ।
अपश्यद्गगनोल्लेखि तत्र [2]स्फटिकवेश्म सा ॥ २ ॥

तदिन्द्रनीलद्वारे सा हेमवेत्राकुले बभौ ।
[4]श्लिष्यन्ती सतडिल्लेखे लेखेवेन्दोः पयोमुचि ॥ ३ ॥

रत्नवातायनस्थस्य [5]तिष्ठन् पार्श्वे महीपतेः ।
द्वाःस्थं किमपि पृच्छन्तीं तामैक्षत रमाङ्गदः ॥ ४ ॥

अन्तः प्रवेशयामास स च [6]तामात्तसम्भ्रमः ।
ययौ सा च विशाम्पत्युर्लोचनामृतवर्तिताम् ॥ ५ ॥

सिताश्महर्म्यमुत्तुङ्गं झटित्यधिरुरोह सा ।
आनन्दकन्दलीचित्तम[7]त्यच्छं पार्थिवस्य च ॥ ६ ॥

क्षिति[8]चुम्बितहारं सा प्रणनाम महीभुजे ।
रमाङ्गदं [9]करग्राहसौहार्द्ये पात्रतां नयत् ॥ ७ ॥

१. B. reads करपल्लवम् for पाणिपल्लवम्. २. T. reads स्फाटिक° for स्फटिक°. ३. T. reads °कुला for °कुले; while B. reads हेमवेशा° and in the margin हेमनेत्रा° for हेमवेत्रा°. ४. T. reads श्लिष्यति for श्लिष्यन्ती. ५. B. reads तिष्ठतोऽस्य for तिष्ठन् पार्श्वे. ६. K. reads तां मुक्तपीठकः for तामात्तसम्भ्रमः. ७. K. reads अत्यर्थं for अत्यच्छं. ८. I. and T. read °पुञ्जित° for °चुम्बित°. ९. We follow here the reading of K, for करग्राहसौहार्द्ये पात्रतां नयत्; while B. and I. read च निर्व्याजसौहृदा परिषस्वजे and T. च निर्व्याजं सौहृदात्परिषस्वजे.

नृपेण स्वयमुक्तापि[1] इत एह्येहि पाटले ।
त[2]ल्लीलामणिपर्यङ्कसविधे निषसाद सा ॥ ८ ॥

पाटलावाक्यम् ।

कृतसम्भाषणा साथ तेनावनिमनोभुवा ।
इत्यवोचत दन्तांशुश[3]बलाधरपल्लवा ॥ ९ ॥
मुद्रितस्मरसौन्दर्यवा[4]न्ता नेत्रामृतच्छटा ।
इयं मूर्तिर्महाराज कच्चि[5]त् कुशलिनी तव ? ॥ १० ॥
कथमेतां प्रविष्टस्त्वं भूमिमत्यन्तदुर्गमाम् ।
न कस्य विस्मयायेयं शक्तिरत्यद्भुता तव ॥ ११ ॥
देव विद्याधरः कोऽपि शापान्निर्मोचितस्त्वया ।
इत्यमन्दः प्रवादोऽत्र तत्कोऽप्यसि नमोऽस्तु ते ॥ १२ ॥
अहो गुणेन राजेन्द्र येन केनापि गृह्यसे ।
य[6]देवं क्लिश्यसे तस्याः फणीन्द्रदुहितुः कृते ॥ १३ ॥

नायकवाक्यम् ।

अथ विद्रुमताम्रोष्ठलुठद्दशनदी[7]धितिः ।
स्मित्वा[8] वसुमतीनाथस्तामिति प्रत्यभाषत ॥ १४ ॥
कदाचित्पाटले कच्चिद्भु[9]जङ्गपतिकन्यका ।
स्मरत्यस्मान् स[10]खीस्वैरसङ्कथास्वन्तरान्तरा ॥ १५ ॥
किमनङ्गवती वक्ति[11] ब्रूते माल्यवती च किम् ।
अप्यस्त्यहिपुरेऽस्माकं किंवदन्ती कियत्यपि ॥ १६ ॥

---

१. B. and I. read °मुक्तैवं and T. °मुक्तेव both for °मुक्तापि. २. B. reads उल्लीला° and T. तल्लीन° for तल्लीला°. ३. B. and K. read °धवला° for °शबला°. ४. T. reads °वाम° for °वान्ता. ५. B. reads कश्चित् and I. कंच्चित् for कच्चित्. ६. B. reads यदेकं for यदेवं. ७. B. reads °दीधितेः for °दीधितिः. ८. B. reads स्मृत्वा for स्मित्वा; while B. and K. read प्रवक्तुं प्रचक्रमे for इति प्रत्यभाषत. ९. T. reads फणिराजस्य कन्यका and I. फणिराजेन्द्रकन्यका for भुजङ्गपतिकन्यका. १०. T. reads सखि for सखी°. ११. T. reads वक्ति ब्रूते माल्यवती पतिम् and अप्यस्ति हि पुरे for वक्ति ब्रूते माल्यवती च किम् and अप्यस्त्यहिपुरे respectively.

फणिराजसुताकर्णे[1] कश्चित् प्रापय्य मद्वचः।
विहितो[2] रत्नचूडेन शुकरूपविपर्ययः॥ १७॥

किमागतासि किं चैवं परिम्लानेव लक्ष्यसे[3]।
निवेदय द्रुतं यन्मे किमप्याशङ्कते मनः॥ १८॥

लेखार्पणम्।

इति पृष्टवते[4] तस्मै सान्द्र[5]प्रेमार्द्रचेतसे।
कन्दर्पदीपनं लेखमर्पयामास पाटला॥ १९॥

तमात्तं[6] वाचयेत्युक्त्वा परमारकुलोद्वहः।
रमाङ्गदस्य चिक्षेप सम्भ्रमोत्तानिते करे॥ २०॥

तं हेमकदलीपत्रकस्तूरीलिखिताक्षरम्।
सोऽवधार्याथ तस्याग्रे[7] व्यक्तवागित्यवाचयत्॥ २१॥

शशिप्रभालेखः।

स्वस्ति स्थितस्य स्वःसिन्धुतीरे फणिपुर[8]स्थया।
इदं मध्यमलोकेन्दोर्माल्यवत्या निवेद्यते॥ २२॥

यदैवास्मत्सखी[9] विन्ध्ये त्वया राजन् व्ययुज्यत[10]।
तदैवेयं कुरङ्गीव विद्धा हृदि मनोभुवा॥ २३॥

दृष्टिः सर्वत्र राजेन्दोः[11] सुधानिष्यन्दिनी तव।
जाता शशिप्रभायां[12] तु सैव हालाहलच्छटा॥ २४॥

---

१. B. and K. read कर्णे for °कर्णे. २. T. and I. read तथापि for विहितो. ३. B. reads दृश्यसे for लक्ष्यसे. ४. T. reads स्फुटवते for पृष्टवते. ५. B. reads सार्द्र° for सान्द्र°. ६. B. reads तमात्तुं and in the margin तं तु तं for तमात्तं. ७. B. reads सोऽवधार्य ततस्याग्रे for सोऽवधार्याथ तस्याग्रे. ८. T. reads मणिपुर° for फणिपुर°. ९. T. and I. read यदैव मत्° for यदैवास्मत्°; while I. reads यदेव for यदैव. १०. T. reads °भ्र युज्यत for °व्ययुज्यत. ११. B. reads राजेन्द्र for राजेन्दोः. १२. B. reads शशिप्रभायाः for शशिप्रभायां.

न विनोदयितुं शक्यमेषा केनापि वस्तुना[1] ।
विनेश तव कर्पूरशीतया सङ्गमाशया ॥ २५ ॥

त्वद्दर्शनोपकारिण्याः[2] करोत्येकावलीमिव ।
इयं पक्ष्माग्रवर्त्यश्रुपृषतच्छद्मना[3] दृशः ॥ २६ ॥

वक्ति[4] व्यक्ताश्रुलेखेन निहितेन करोदरे ।
इयमापाण्डुगण्डेन स्मरतापमुखेन्दुना ॥ २७ ॥

शिरीषादपि मृद्वङ्गी[5] क्वेयमायतलोचना ।
एष क्व च कुकूलाग्निकर्कशो मदनज्वरः[6] ॥ २८ ॥

नेयं प्रवालशय्यायां नापि प्रालेयवेश्मनि ।
न[7] चेन्दुमणिपर्यङ्के सखी निर्वृतिमेति नः ॥ २९ ॥

निसर्गरक्तमेतस्याः सखीजनमिवाधरम् ।
नयन्ति किमपि म्लानिमुष्णा[8] निःश्वसितोर्मयः ॥ ३० ॥

अरतित्वमवाप्याम्भःकणिकेव[9] विघूर्णते ।
एषा कमलिनीपत्रशय्यायामायतेक्षणा ॥ ३१ ॥

अस्याः स्मराग्निसन्तप्तं वपुः शशिकलामृदु ।
नीरन्ध्रघर्मसलिलच्छलेनेव विलीयते[10] ॥ ३२ ॥

कृशतामङ्गके गाढमस्याः कुसुमकोमले ।
आरोपयति पुष्पेषुर्मौर्वीमिव शरासने[11] ॥ ३३ ॥

---

१. K. reads शक्या चैषा कस्यापि वार्तया for शक्यमेषा केनापि वस्तुना. २. T. has – – शेन्योप° for त्वद्दर्शनोप°. ३. T. reads पक्षाग्रवत्यश्र° and I. पक्ष्माग्रवल्त्यश्रु° for पक्ष्माग्रवर्त्यश्रु°. ४. T. reads व्यक्ति व्यक्ताश्रुलेखेन विहितेन for वक्ति व्यक्ताश्रुलेखेन निहितेन. ५. K. reads तन्वङ्गी for मृद्वङ्गी. ६. T. and I. read मदनानलः for मदनज्वरः. ७. T. and I. read नवेन्दु° for न चेन्दु°. ८. B. reads °मुष्ण° for °मुष्णा. ९. T. and I. read अरतिं त्वद्दशाप्याम्भ° for अरतित्वमवाप्याम्भः and B. विघूर्णिते for विघूर्णते. १०. K. reads विशीर्यते and T. विधीयते for विलीयते; while B. reads व्यलीयत for the same. ११. K. reads शरासनम् for शरासने.

धृतया हृदि बालेयं वितीर्णहरिचन्दने।[1]
निर्वाणमेति भवतः कथया न जलार्द्रया॥ ३४॥

आकर्णकृष्टकोदण्डस्त्वां विना निशितैः शरैः।
भिनत्त्यङ्गमनङ्गोऽस्याः क्षतिश्चेतसि कापि मे॥ ३५॥

इयमत्यच्छहृदये दधत्यतिसुवृत्तताम्।[2]
बाला माणिक्यमुकुरे विमुखी सम्मुखी[3] त्वयि॥ ३६॥

एषा शिखेव दीपस्य मुग्धा[4] दग्धदशाश्रया।
स्मरानिलपरामर्शादितश्चेतश्च वेपते॥ ३७॥

इयमिन्दुद्युतिहरं युक्तमत्यायतैर्गुणैः।[5]
मृणालवलयं हस्ते वहति त्वां च चेतसि॥ ३८॥

अनङ्गतापवत्यस्या निकामसरसं हृदि।
सङ्कुचत्यब्जिनीपत्रं न तु त्वत्प्रेमपल्लवः[6]॥ ३९॥

क्रियते वलयेनास्या मणिबन्धे गतागतम्।
कार्श्याग्रभूमिमाप्तायास्त्वय्यन्तःकरणेन च॥ ४०॥

जायते पेशलमपि प्रायो वस्त्वन्यथाऽऽपदि।[7]
प्राप्तो मृणालहारोऽपि[8] यदस्या दाहहेतुताम्॥ ४१॥

निहितास्सास्रमालीभिर्लवलीपाकपाण्डुनी।[9]
अस्यास्तनतटे भारः[10] परं वानीरपल्लवाः॥ ४२॥

---

१. T. reads विस्तीर्ण° for वितीर्ण°. २. T. reads अभिसुरक्तताम् for अतिसुवृत्तताम्. ३. B. reads सम्मुखे for सम्मुखी. ४. I. reads स्मरात् for मुग्धा. ५. B. reads अस्याहितैः, but in the margin अस्याहतैः for अत्यायतैः; while T. reads इन्दुद्युतीहारं for इन्दुद्युतिहरं. ६. T. reads °पल्लवम् for °पल्लवः. ७. K. reads वस्त्वन्यथान्यथा and T. वस्त्वन्यदापदि for वस्त्वन्यथाऽऽपदि. ८. T. reads °भारोऽपि for °हारोऽपि. ९. B. reads निहितः सास्र°, but, in the margin निहिताः सास्र°; while I. निहताः for निहिताः. १०. T. reads भारं for भारः.

न चन्दनेन नोशीरवारिणा न जलार्द्रया ।
नाऽस्याः पुटकिनीपत्रैः शममेति स्मरज्वरः ॥ ४३ ॥
किन्त्वाऽपरं त्वमेतस्या[1] हृदयस्याधिदेवता ।
यतस्त्वन्मयमेवैषा[2] विश्वं विश्वेश पश्यति ॥ ४४ ॥
रत्नचूडोपनीतेन सन्देशेन तवाधुना ।
इयमुच्छ्वसिता[3] किञ्चित् सुधागण्डूषबन्धुना[4] ॥ ४५ ॥
तावदागच्छ वेगेन गृहीत्वा हेमपङ्कजम् ।
अनङ्गविधुता यावदियं श्वसिति नः सखी[5] ॥ ४६ ॥

**नायकस्य प्रतिसन्देशः ।**

एवमाकर्ण्य ललितं लेखार्थमथ[6] पार्थिवः ।
उद्भिन्नसान्द्र[7]पुलकः पाटलामित्यवोचत ॥ ४७ ॥
यथा सखी वः किमपि प्रपन्ना विधुरां दशाम् ।
तथा त्वमपि[8] मामेवं पाटले किं न पश्यसि? ॥ ४८ ॥
तद्गच्छ तां शशिमुखीमाश्वासयितुमर्हसि ।
वयमेते च हेमाब्जमानेतुं प्रयतामहे[9] ॥ ४९ ॥
तथा कार्यं न वन्ध्यः स्याद्यथा मम मनोरथः ।
वक्तव्या माल्यवत्यैवं[10] मदिरा वल्गुवादिनि ॥ ५० ॥

**पाटलाप्रयाणम् ।**

आवृत्तिदत्तसन्देशा सा ततः पृथिवीभुजा ।
फणिराजेन्द्रनगरीं[11][12] त्वरितं पाटला ययौ ॥ ५१ ॥

---

१. T. reads त्वमेवान्याः for त्वमेतस्याः. २. B. reads एषा हि for एवैषा. ३. T. reads उच्छ्वसते for उच्छ्वसिता. ४. B. reads °सीधुना for °बन्धुना. ५. K. reads श्वसति for श्वसिति ; while T. reads यावदियं त्व सखि तत्सखी for यावदियं श्वसिति नः सखी. ६. T. reads अधि° for अथ. ७. B. reads °सार्द्र° for °सान्द्र° and substitutes इदमब्रवीत् for इत्यवोचत. ८. I. and T. read ऽहमपि for त्वमपि. ९. K. reads प्रयतावहे for प्रयतामहे. १०. T. reads एव for एवं and substitutes °वादिनी for °वादिनि. ११. T. mutilates first five letters. १२. B. reads °नगरं for °नगरीं.

प्रस्थानशंसी सहसा तस्याऽथे[1] पृथिवीपतेः ।
प्रलयाम्बुधरध्वानधीरं दध्वान दुन्दुभिः ॥ ५२ ॥

विद्याधरस्त्री-पुरुषवर्णनम् ।

नदन्नुत्कम्पिमनसां स विद्याधर[2]योषिताम् ।
निन्ये प्रियपरिष्वङ्गश्लथतामथ दोर्लताः[3] ॥ ५३ ॥

कथञ्चित् प्राणनाथस्य मुखादधरपल्लवम् ।
बाला व्यघटयत् काचिदु[4]रसश्च पयोधरौ ॥ ५४ ॥

शनै[5]र्बबन्ध जघने नखाङ्कवति मेखलाम् ।
[6]काऽपि स्मितमुखी कान्ते तिर्यगर्पितलोचना ॥ ५५ ॥

दृष्टिं[7] दास्यन्ति मे सख्यः खण्डिते दन्तवाससि ।
किमत्र कृत्यमित्यन्या किमपि व्याकु[8]लाऽभवत् ॥ ५६॥

[9]काचित् पर्यङ्कमालोक्य सालक्तकप[10]दाङ्कितम् ।
अन्योन्यार्पितनेत्राभिर्वयस्याभि[11]रहस्यत ॥ ५७ ॥

ए[12]का माणिक्यकटकं कराग्रच्युतमाददे ।
हृदयं पुष्पचापेन मध्ये विद्धमिवात्मनः ॥ ५८ ॥

[13]चुम्बनक्लिष्टबिम्बोष्ठं जागरारुणलोचनम् ।
मु[14]खाम्भोजं दृशाऽन्योन्यं विलासिभिरपीयत ॥ ५९ ॥

---

१. T. and I. read ऽपि जगतीपतेः for ऽथ पृथिवीपतेः. २. T. mutilates four letters before विद्याधर. ३. T. reads °परिष्वङ्ग- दधतामथ दोर्लताम् for °परिष्वङ्गश्लथतामथ दोर्लताः. ४. B. reads उरसा for उरसः. ५. I. has शनैः बन्ध° for शनैर्बबन्ध. ६. B. reads कोऽप° for काऽपि; while I. has स्मितमुखे for स्मितमुखी. ७. T. reads दृष्टं for दृष्टिं. ८. K. reads व्यथिता for व्याकुला.. ९. I. reads काऽपि for काचित्. १०. B. and K. read °पदान्वितम् for °पदाङ्कितम्. ११. T. reads °पि° for °भि°. १२. B. reads काऽपि for एका. १३. B. reads चुम्बित° T. चुम्बिन°(?) for चुम्बन°. १४. I. and T. read मुखाम्बुजं for मुखाम्भोजं.

रत्नवतीम्प्रति गमनम् ।

सो ऽथ प्रववृते गन्तुं विद्याधरबलान्वितः ।
रथेन रथिनामग्र्यः पुरीं रत्नवतीम्प्रति ॥ ६० ॥

रत्नचूडसमागमः ।

ततः फणिकुमारेण रत्नचूडेन सो ऽध्वनि ।
समगंस्त जगत्पूज्यः पूषा दर्श इवेन्दुना ॥ ६१ ॥

स तस्योपायनीचक्रे दिक्चक्रस्खलितध्वनिम् ।
अच्छिन्नदाननिष्यन्दमात्मानमिव वारणम् ॥ ६२ ॥

नृपस्य दीपिकाकृत्यं चक्रिरे तिमिरच्छिदः ।
पुरः प्रसर्पत्तत्सैन्यफणारत्नांशुसूचयः ॥ ६३ ॥

कियताप्यथ कालेन सन्ततैः स प्रयाणकैः ।
प्रपेदे कुसुमाश्लेषसुगन्धिपवनं वनम् ॥ ६४ ॥

दूतप्रस्थापनम् ।

असुराधिपतिं साम्ना याचितुं हेमपङ्कजम् ।
स्थित्वा स तत्र पुरतो विससर्ज रमाङ्गदम् ॥ ६५ ॥

स च त्रिजगतः सारमादायेव विनिर्मिताम् ।
उत्तुङ्गरत्नप्रासादां प्राप रत्नवतीं पुरीम् ॥ ६६ ॥

रामार्थबद्धकक्षेण प्रेषितः प्रभुणा ऽविशत् ।
परिखार्णवमुल्लङ्घ्य स तां लङ्कामिवाङ्गदः ॥ ६७ ॥

---

१. K. reads °मभ्यरुच्या for °मग्र्यः पुरीं; while T. °मग्रे रुचिं for the same. २. T. reads °ध्वनिः for °ध्वनिम्. ३. T. reads °फणि° for °फणा°. ४. K. reads प्रधानकैः for प्रयाणकैः. ५. K. reads पवना° for कुसुमा° and °वननं for °पवनं. ६. T. reads धाम्ना for साम्ना. ७. I. reads तस्मिन् स पुरतो and T. तस्मिंन् सपुरतो for स तत्र पुरतो. ८. T. reads साराम् for सारम्. ९. K. reads प्रापत् for प्राप. १०. B. reads प्रेषितां, but in the margin प्रेषितः; while T. substitutes नामार्थ° for रामार्थ°. ११. T. reads परिपूर्णवमुल्लङ्घ्य स तां for परिखार्णवमुल्लङ्घ्य स तां and K. परिपूर्ण इवोल्लङ्घ्य स तां for the same.

कोऽयं कोऽप्ययमन्योन्यमेवं पल्लवितोक्तिभिः ।
कौतुकस्तिमिताक्षैः स पौरैश्चिरमदृश्यत ॥ ६८ ॥
स चेन्द्रनीलहर्म्येषु ददर्शासुरकन्यकाः ।
लोलास्तमालश्यामेषु मेघेष्विव शतह्रदाः ॥ ६९ ॥
निपीयमानः पौरस्त्रीनेत्रस्फटिकशुक्तिभिः ।
वैरिद्विपघटासिंहः सिंहद्वारमवाप सः ॥ ७० ॥
असुरेन्द्रस्य दोःकण्डुदुःस्थानैकभटाकुलम् ।
वीरः सोऽविशदास्थानमथ द्वाःस्थनिवेदितः ॥ ७१ ॥

असुरेन्द्रवर्णनम् ।

आसीनमञ्जनश्याममुच्चैः स्फटिकविष्टरे ।
हिमाचलेन्द्रशिखरे नवीनमिव नीरदम् ॥ ७२ ॥
केयूरपद्मरागांशुमञ्जरीजटिलावुभौ ।
भुजौ बिभ्राणमुज्ज्वालप्रतापज्वलनाविव ॥ ७३ ॥
उरसा रुद्धगीर्वाणद्विपेन्द्ररदकोटिना ।
हारवल्लीं दधल्लोलां दोलामिव जयश्रियः ॥ ७४ ॥
दधानं दीप्तिपर्यस्ततिमिरौ मणिकुण्डलौ ।
बन्दीकृतौ संहैवोभौ सूर्याचन्द्रमसाविव ॥ ७५ ॥
वीरव्रतस्यालङ्कारमहङ्कारस्य जीवितम् ।
जगतामङ्कुशं तत्र स वज्राङ्कुशमैक्षत ॥ ७६ ॥

---

१. K. reads °मर्मस्यत for °मदृश्यत. २. T. reads स चैवं for सचेन्द्र°. ३. K. reads तडिल्लताः for शतह्रदाः and substitutes लीलातमाल° for लोलास्तमाल°. ४. B. reads दुष्कण्डुदुस्थानंकभटान्वितम्, T. दोः कण्डुरुस्थानेकहठाकुलम्. and I दोःकण्डुदुःस्थानेकभटाकुलम् all for दोःकण्डुदुःस्थानैकभटाकुलम्. ५. B. reads °दः स्थानमथ द्वाःस्थनिवेदितम् and K. °दुस्थानपथमास्मनिवेदितम् for °दास्थानमथ द्वाःस्थनिवेदितः. ६. I. reads °विस्तरे for °विष्टरे. ७. B. K. and I. read रुग्ण° for रुद्ध°. ८. K. मालाम् for दोलाम्. ९. B. reads °तिमिरो for °तिमिरौ, but it seems to be incorrect. १०. I. reads सहै° for सहै°. ११. K. reads वीरस्य तस्य का for वीरव्रतस्यालं°; while T. इभराजस्य for अहंकारस्य. १२. T. reads जगाद्मङ्कुशं for जगतामङ्कुशं and ईक्षत for ऐक्षत.

तन्निर्देशितमध्यास्त स हिरण्मयमासनम् ।
नानारत्नांशुशबलं शृङ्गं मेरोरिवार्यमा ॥ ७७ ॥

दूतम्प्रति प्रश्नः ।

कुर्वन् मुखानि स्मेराणि दशनज्योत्स्नया दिशाम् ।
विधाय सत्क्रियामेवमसुरेन्द्रस्तमब्रवीत् ॥ ७८ ॥
अहो किमपि कल्याणमासन्नफलमद्य नः ।
अन्यथा हि गृहं सन्तः किमायान्ति भवद्विधाः ॥७९॥
यदाश्रमे वङ्कुमुनेर्युवयोर्वृत्तमद्भुतम् ।
तत् कर्णातिथितां नीतमेत्य प्रणिधिभिर्मम ॥ ८० ॥
एतया साम्प्रतं ब्रूहि युतो विद्याधरैरयम् ।
किमाकाङ्क्षति वः स्वामी फलं पातालयात्रया ॥८१॥
नियुज्यन्ते नृपेणार्थे नाल्पीयसि भवादृशाः ।
शेषो धृतेर्भुवोऽन्यत्र व्यापारयति किं फणान् ॥ ८२॥
तदत्र प्रहितो राज्ञा किमर्थमसि कथ्यताम् ।
अर्थिनां व्यर्थतामेति न जातु प्रार्थना मयि ॥ ८३ ॥

रमाङ्गदोक्तिः ।

मार्गैरिवायतैर्वाचां शुचिभिर्दशनांशुभिः ।
सीमन्तिताधरः स्मित्वा तमित्यूचे रमाङ्गदः ॥ ८४ ॥

---

१. B. and I. read °निवेशित° for °निर्देशित° and K. °निदर्शित° for the same. २. K. reads °धवलं, but corrects in the margin °शबलं. ३. K. reads ऽसकृत् for दिशाम्. ४. K. reads this line as follows :—

कुतोऽन्यथा गृहं सन्तः समायान्ति भवद्विधाः ॥.

५. K. reads अत्र for एत्य. ६. T. reads एकया for एतया and T. and I. read ब्रूत वृतो for ब्रूहि युतो. ७. T. reads स for वः. ८. T. and I. read भवादृशः for भवादृशाः ; while B. reads भवद्विधाः for the same. ९. B. reads धृते भूत° for धृतेर्भुवो°. १०. B. K. and I. read फणाम् for फणान्. ११. B. reads अस्रि for असि. १२. I. reads व्यर्थिताम् for व्यर्थताम्. १३. B. reads वाचं for वाचां; while K. मार्गैरिवायतैर्वाचं and in the margin सिद्धैर्मार्गैरिव गिरां for मार्गैरिवायतैर्वाचां. १४. B. reads स्मृत्वा for स्मित्वा.

आसां सुधारसार्द्राणां शुद्धानामसुराधिप।
गिरां त्वमेको[1] यत् सत्यमिन्दुर्भासामिवाकरः ॥ ८५ ॥

कच्चित्[2] त्वयाऽयमज्ञायि देवः साहसलाञ्छनः।
जगत्प्रदीपमथवा[3] को न वेत्ति विरोचनम् ॥ ८६ ॥

फणिराजसुतामेष परिणेतुं शशिप्रभाम्।
पथाऽनेन रथ[4]क्षुण्णरत्नशैलेन गच्छति ॥ ८७ ॥

त्वद्द्वापिहेमपद्मेन[5] शुल्कसंस्था कृता किल।
अस्याः[6] पित्रेति देवेन तदर्थं प्रहिता वयम् ॥ ८८ ॥

अनेनेच्छसि चेत् कर्तुं सख्यं साहसलक्ष्मणा।
तत् कार्तस्वरराजीवमानीय स्वयमर्प्यताम् ॥ ८९ ॥

लुम्पन्ति[7] त्वन्मुखच्छायां यावन्नाऽस्य चमूरजः।
कुरुष्व तावदातिथ्यं हेमाब्जेन महीभुजे[8] ॥ ९० ॥

किमन्यत् 'नार्थिनां मत्तो विघटन्ते[9] मनोरथाः'।
इति त्वया स्वमेवाशु प्रमाणीक्रियतां वचः ॥ ९१ ॥

वज्राङ्कुशवाक्यम्।

इत्युक्तवति सामर्षभटदृष्टे[10] यशोभटे।
प्रत्यभाषत सावज्ञं विहस्यासुरकुञ्जरः[11] ॥ ९२ ॥

---

१. K. reads त्वमसि यल्लोके for त्वमेको यत्सत्यम् ; while B. इन्दुभासाम् for इन्दुर्भासाम्. २. B. reads कश्चित् for कच्चित् ३. T. reads °प्रतीपम् for °प्रदीपम्. ४. T. reads रव° for रथ°; while I. wants one letter after ने°. ५. T. reads त्वद्द्वापिहेमपत्रेण for त्वद्द्वापिहेमपद्मेन. ६. K. reads तस्याः for अस्याः. ७. B. and K. read लिम्पन्तिस्म मुखच्छायां for लुम्पन्ति त्वन्मुखच्छायां; while T. has त्वताम्यस्व मुखच्छायां (?) for the same. ८. K. reads महीभुजः for महीभुजे. ९. T. reads विस्फुटन्ते for विघटन्ते. १०. B. reads °धृष्टे for °दृष्टे. ११. T. and I. read °पुङ्गवः for °कुञ्जरः.

अहो बत[1] विदग्धोऽपि धिङ् मुग्ध इव लक्ष्यसे ।
विदुषापि त्वया किञ्चि[2]द्यदुक्तमसमञ्जसम् ॥ ९३ ॥

यूयं क्व मानुषाः पृथ्वीसङ्कटस्वाम्य[3]दुःस्थिताः? ।
सा च त्रिजगतां भर्तुरुचि[4]ता क्व शशिप्रभा? ॥ ९४ ॥

तादृङ्मदङ्कमेवात्र स्त्रीरत्नमधिरोहति ।
[5]रमते हि हरस्यैव मौला[6]विन्दुकलाङ्कुरः ॥ ९५ ॥

यद्यदस्तीह[7] पाताले रत्नं क्वचन किञ्चन ।
भाजनं तस्यतस्याऽहमेकः[8] के यूयमुच्यताम्? ॥ ९६ ॥

[9]सहते नृपतौ नैव हेमतामरसार्पणम् ।
[10]ममैष शक्रविजयक्रीडादुर्ललितो भुजः ॥ ९७ ॥

[11]प्रभुस्तव नयज्ञोऽपि किमनर्थाय केवलम्[12] ।
दीर्घे[13]न्दीवरमालेति विकर्षत्यसितोरगम् ॥ ९८ ॥

इत एव निवर्तध्वं वर्तध्वं[14] वचने मम ।
[15]अवटे किमिति क्षेप्तुमात्मानं यूयमुद्यताः ॥ ९९ ॥

यावदेते न मुञ्चन्ति मर्यादामसुराब्धयः ।
तावद्दूरापसारेण स्वामिनं त्रातुमर्हथ[16] ॥ १०० ॥

नरेन्द्रं दुर्जिगीषातस्त[17]द्गच्छ विनिवारय ।
त्वादृशाः किमुपेक्षन्ते पतिमुत्पथगामि[18]नम् ॥ १०१ ॥

---

१. T. reads तत्र for बत. २. T. and I. read तदुक्तम् for यदुक्तम्. ३. T. reads °स्यास्य° and I. °स्वास्य° for °स्वाम्य°. ४. T. reads °रुचिता° for °रुच्चिता°; while B. substitutes त्रिजगती° for त्रिजगतां. ५. B. reads नमते for रमते. ६. T. reads लोलाबिन्दु° for मौलाविन्दु°. ७. T. reads अस्ति हि for अस्तीह. ८. K. reads एष for एकः. ९. T. reads जहते नृपते नैष for सहते नृपतौ नैव; while B. substitutes इह ते for सहते. १०. B. reads एष मे for ममैष. ११. B. T. and I. read विभुः for प्रभुः. १२. K. reads साम्प्रतम् for केवलम्. १३. T. reads दीर्घपीवर° for दीर्घेन्दीवर°. १४. B. reads तिष्ठध्वं for वर्तध्वं. १५. T. has अवैमि for अवटे and क्षेप्तु — — मात्मानमुद्यताः. १६. B. T. and I. read अर्हसि for अर्हथ. १७. K. reads तावद्गच्छ निवारय for तद्गच्छ विनिवारय. १८. B. T. and I. read °वर्तिनम् for °गामिनम्.

अथवाऽस्यास्ति शक्तिश्चेत् किमद्यापि विलम्बते ।
आयातु स्वयमादातुमितः काञ्चनपङ्कजम् ॥ १०२ ॥
किमन्यज्ज्ञायतामेष खड्गधारातिथिर्मम ।
इत्युक्त्वा कोपतरलं विररामासुरेश्वरः ॥ १०३ ॥

रमाङ्गदस्य प्रतिवचनम् ।

धैर्यसंवृतकोपोऽथ स्मयमानो रमाङ्गदः ।
तमित्यमुक्तपर्यङ्कः प्रतिवक्तुं प्रचक्रमे ॥ १०४ ॥
निर्वाणवीर्यवातेऽस्मिन् रसातलबिलोदरे ।
अभुग्नभुजकण्डूतिरहो किमपि दृश्यसे ॥ १०५ ॥
मन्ये तवैतन्नीरन्ध्रमज्ञातस्व-परान्तरे ।
पातालचिरसंवासाच्चित्ते परिणतं तमः ॥ १०६ ॥
यां हरस्याष्टमीमाहुर्मूर्तिमाहुतिलेहिनीम् ।
तत्सूतिः प्रागभूद्भर्ता परमार इति क्षितेः ॥ १०७ ॥
कृतावतारं तद्वंशे वधाय विबुधद्विषाम् ।
किमादिदेवं कंसारिं धिङ् मर्त्य इति मन्यसे ॥ १०८ ॥
सन्दानितकम् ।

---

१. K. reads आशातुं स्वयमायातु मत्तः for आयातु स्वयमादातुमितः. २. K. reads °गतिः for °तिथिः. ३. B. reads ऽत्र for ऽथ. ४. I. and T. read तमित्यामुक्त° and T. substitutes °पर्यङ्कं for तमित्यमुक्त° and °पर्यङ्कः respectively. ५. B reads निर्याण° and T. निर्वार° both for निर्वाण°; while I. °वीरवार्तेऽस्मिन् and T. °वीरवत्तस्मिन् both for °वीर्यवाते ऽस्मिन्. ६. B. T. and I. read °कण्डूभि° for °कण्डूति°; while B. substitutes अभग्न° for अभुग्न°. ७. B. reads in the margin दृश्यते, K. reads कत्थसे and T. दृश्यसि all for दृश्यसे. ८. K. reads अज्ञातस्य परान्तरे for अज्ञातस्व-परान्तरे; while T. substitutes °स्स्व° for °स्व.° ९. K. reads पाताले चिर° for पातालचिर°. १०. I. reads चित्ते for चित्ते. ११. T. reads °लोभिनीम् for °लेहिनीम्. १२. T. reads तच्छुतिः for तत्सूतिः. १३. B. reads मर्त्या for मर्त्य. १४. B. and T. do not insert this.

कमलेव मुकुन्दस्य पार्वतीव पिनाकिनः ।
[१]केणिकन्योचिता पत्नी सा महीमीनलक्ष्मणः ॥१०९॥

तां हठेनात्मसात्कर्तुमसुरेन्द्र न [२]शक्ष्यसे ।
न रत्नसूचिमाक्रष्टुमयस्कान्त[३]स्य योग्यता ॥ ११० ॥

पदं पथि [४]निधत्से ऽत्र किमन्यायमलीमसे ।
अपथे चरतां यान्ति दूराद्दूरं विभूतयः ॥ १११ ॥

अनर्पणं महीपाले हेमपङ्केरुहस्य यत् ।
तवापरिघमुत्प्रेक्षे तदेव द्वारमापदाम् ॥ ११२ ॥

राजेन्द्रदी[५]पके तस्मिन् समराङ्गणवर्तिनि ।
एते भटास्ते न चिरादायास्यन्ति पतङ्गताम् ॥ ११३ ॥

[६]तथा विधेहि न यथा त्वन्दतःपुरयोषिताम् ।
करपल्लवशय्यासु शेरते वदनेन्दवः ॥ ११४ ॥

प्रवृत्तपतिशोकार्तपौरस्त्रीपरिदे[७]वना ।
इयमुत्सन्नसङ्गीता माभूद्रत्नवती पुरी ॥ ११५ ॥

देवस्यार्पितहेमाब्जस्त[८]देहि पत पादयोः ।
शिरः पुनन्तु ते कामं पुण्यास्तत्पादपांसवः ॥ ११६ ॥

अथवा सुभटैस्सार्धमुत्तिष्ठ पुरतो भव ।
समं विद्याधरानीकैरयमायाति [९]भूपतिः ॥ ११७ ॥

---

१. K. reads this line as follows :—
सैव तस्योचिता पत्नी महीतलशचीपतेः ॥.

२. T. reads शक्ष्यसि and K. शक्यसे. ३. I. omits one letter before स्य and substitutes य for स्य. ४. T. and I. read विधत्से for निधत्से. ५. T. reads °दीपते for °दीपके. ६. K. reads विधेहि भो यथा नैव for तथा विधेहि न यथा. ७. I. reads °देविता for °देवना ; while T. शोकार्तिपौरश्रीप्रतिदेविता for शोकार्तपौरस्त्रीपरिदेवना. ८. K. reads समेहि for तदेहि. ९. T. reads पार्थिवः for भूपतिः.

किमन्यत् [1]सममेतेन शिरस्तामरसेन ते ।
हेमकोकनदं देवः स्वयमेव ग्रहीष्यति ॥ ११८ ॥

रमाङ्गदागमनम् ।

[2]तमित्युक्त्वा सभामध्यान्निर्जगाम रमाङ्गदः ।
निकटं च रणोत्कस्य जगाम जगतीपतेः ॥ ११९ ॥

अथ वदति शनैः समेत्य तस्मिन्
[3]अमररिपोर्वचनानि तानि तानि ।
असुरपतिवि[4]नाशकालरात्रिम्
भृकुटीमुवाह मुखेन मालवेन्द्रः ॥ १२० ॥

गत्वा विद्याधरभटचमूचक्रवालैः समं स
क्ष्मापालोऽथ व्यधित परितस्तत्पुरो रत्नवत्याः ।
येन व्यक्तामरजयमहासाहसस्यासुराणां
[5]नाथस्यासीन्नवपरिभवश्यामला वक्त्रलक्ष्मीः ॥१२१॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये कनकारविन्दप्रार्थनो नाम षोडशः सर्गः ॥ १६ ॥[6]

---

१. K. reads स्वयम् for समम्. २. B. reads इत्युक्त्वा स for तमित्युक्त्वा. ३. I. does not insert this तानि; while T. substitutes समर° for अमर°. ४. I. reads °निक्काश° for °विनाश.° ५. T. reads आसीभर्तुर्नवपरिभवश्यामला मन्त्र लक्ष्मीः and I. आसीद्भर्तुर्नवपरिभवश्यामला मन्त्रलक्ष्मीः for नाथस्यासीन्नवपरिभवश्यामला वक्त्रलक्ष्मीः. ६. T. reads श्रीसाहसाङ्कचरिते षोडशः सर्गः and I. परिमलस्य नवसाहसाङ्कचरिते कनकारविन्दप्रार्थनः षोडशः for the whole kolophone; while B. इति षोडशः सर्गः for the same.

# अथ सप्तदशः सर्गः ।

युद्धवर्णनम् ।

अथाहिविद्याधरराजसैन्यैर्
निपीडितायां पुरि रत्नवत्याम् ।
भटास्सकोपं भुजदर्पभाजो
निर्जग्मुराकृष्टकृपाणपट्टाः ॥ १ ॥

अन्योन्यसङ्घट्टवशेन तेषाम्
उदञ्चिताः काञ्चनकङ्कटेभ्यः ।
युगान्तकालानलबीजशङ्कां
न कस्य चक्रुः शिखिनः स्फुलिङ्गाः ॥ २ ॥

भालेषु भीमा भृकुटीर्वहन्तो
भृङ्गत्विषश्चासिलताः करेषु ।
खुराग्ररुग्णावनिभिस्सरोषं
निरीयुरन्ये चतुरैस्तुरङ्गैः ॥ ३ ॥

न्यभादनीकं करिणां च सान्द्र-
सिन्दूरपूरारुणगण्डभित्ति ।

---

१. B. reads पुर° for पुरि. २. K. reads °धन्वाः for °पट्टाः ३. T. reads °कङ्कणेभ्यः for °कङ्कटेभ्यः. ४. T. reads समन्तात् for स्फुलिङ्गाः. ५. T. reads फलेषु for भालेषु. ६. T. reads जृम्भद्विषः for भृङ्गत्विषः. ७. I. reads °ग्लावनिभिः for °ग्णावनिभिः and T. °मूर्च्छावनिभिः for °ग्णावनिभिः. ८. We follow here the marginal reading of B. and K.; while B. substitutes न्ययादनीकं for न्यभादनीकं and T. reads नरैरनीकं हरिणां च सान्द्रं सिन्दूरचूर्णारुण,° and I. नरैरनीकं करिणां च सान्द्रसिन्दूरपूरारुण° for न्यभादनीकं करिणां च सान्द्रसिन्दूरपूरारुण.° the first letter न originally was नि, but corrected न.

प्रत्यग्रदावानललीढकोटि-
कुलाचलेन्द्रप्रचयोपमेयम् ॥ ४ ॥
पुरो रणोत्सेकभृतां निरुद्धम्
ओघेन विद्याधरवाहिनीनाम् ।
तत् पुञ्जितं सैन्यममर्त्यशत्रोर्
बभूव मूले मणितोरणस्य ॥ ५ ॥
साटोपमारोपितचापयष्टिर्
निबद्धतूणीरयुगो गजस्थः ।
स निर्जगामाथ महासुरेन्द्रो
वेगादहङ्कार इवात्तदेहः ॥ ६ ॥
युगात्ययाम्भोधरनादधीरस्
तस्योद्गतः सङ्गरतूर्यघोषः ।
बद्धप्रतिश्रुन्ति नितान्तभीमञ्
चकार पातालबिलोदराणि ॥ ७ ॥
सत्पुष्करानञ्जनपुञ्जभासः
पथो जयस्याथ गजानसौ च ।
व्यापारयन्तिस्म रयेण वीरास्
तत्प्रेरिता वैरिवरूथिनीषु ॥ ८ ॥
परस्परापातिकृपाणनिर्यत्-
ज्वालावलीपल्लवितान्तरिक्षः ।

---

१. B. reads °दावानलदग्धमान° and I. °दावानलिलीढकोटि° for °दावानलली-ढकोटि.° । २. B. and K. read पुरा for पुरो. ३. T. and I. read पिनद्ध° for निबद्ध°. ४. B. reads °दीर्घस् for °धीरस्. ५. T. reads °प्रतिभान्ति for. °प्रति-श्रुन्ति; while B. substitutes °दीर्घम् for °भीमम्. ६. I. reads यमस्य for जयस्य; while T. substitutes पथे for पथो. ७. T. reads नयेन for रयेण. ८. I. reads °विरूथिनीषु for °वरूथिनीषु.

अभूत् प्रवृत्तः समरो महाहि-
विद्याधरेन्द्रासुरपुङ्गवानाम् ॥ ९ ॥
वीरेषु धावत्सु चरत्स्वमन्दं
गजेषु वल्गत्सु तुरङ्गमेषु ।
अकालकल्पात्ययशङ्कितानि
चकम्पिरे सप्त रसातलानि ॥ १० ॥

प्रकाशयन्तः [४]करणप्रपञ्चं
सुराङ्गनाभिः स्पृहये[५]क्ष्यमाणाः ।
अत्यद्भुतं [६]नृत्तमिवारभन्त
भटा रणप्राङ्गणरङ्गमध्ये ॥ ११ ॥

उत्प्लुत्य वेगात् [७]पवमानमार्गं
विद्याधरैर्दानजलाविलानि ।
पटु व्यपाट्यन्त मनङ्गजानां
तीक्ष्णासि[८]पत्रक्रकचैः शिरांसि ॥ १२ ॥

निपत्य कुम्भेषु महागजानां
नीरन्ध्रमुक्तेषु [९]पटु क्वणन्तः ।
भान्तिस्म विद्याधरपुङ्गवानाम्
[१०]मुक्ताट्टहासा इव खड्गपट्टाः ॥ १३ ॥

---

१. K. reads अभून्मृधं तत् खलु रोमहारि for अभूत् प्रवृत्तः समरो महाहि°; while I. substitutes ममाहीं for महाहि°. २. T. reads यावत्सु for धावत्सु. ३. K. substitutes भुजेषु and T. भजेषु for गजेषु. ४. K. reads समर° for करण°. ५. B. and T. read ईक्षमाणाः for ईक्ष्यमाणाः. ६. T. reads न्यस्तम् for नृत्तम्. ७. B reads पवनस्य for पवमान°. ८. K. reads °पत्रैः सघनैः for °पत्रक्रकचैः. ९. K. reads पुनः for पटु. १०. T. reads मुक्तार्द्र° for मुक्ताट्ट°.

[1]आवर्तताम्रूर्मिलतायमान-
निस्त्रिंशवल्लीवलयाकुलासु।
प्रपेदिरे पूर्वसुरो[2]ज्झितानि
[3]चक्राणि विद्याधरवाहिनीषु॥ १४॥

फणावलीष्वापतितोरगाणाम्
अफल्गुर[4]त्नोपलकर्कशासु।
कृपाणधारा [5]मसृणीबभूव
महासुराणां न तु सङ्गरेच्छा॥ १५॥

अमान्ति पातालतले [6]प्रसस्नुः
क्षितौ बिलद्वारै[7]र्विनिर्गतानि।
ज्याशब्दहृ[8]ष्टासुरसिंहनाद-
तुरङ्गहेषा-गजबृंहितानि॥ १६॥

[9]प्रधावदश्वीयखुराहतानाम्
[10]अभ्युद्गतो रत्नभुवां परागः।
गीर्वाणचापच्छविलाञ्छितानि
कृत्स्नानि चक्रे ककुभां मुखानि॥ १७॥

[11]भटास्त्रपूर्णैः परितो गजानां
स्वदानप[12]ङ्कोपचितैः पदाङ्कैः।

---

१. T. reads आवर्तिताम् for आवर्तताम्. २. T. reads °पुरोज्झितानि for °सुरोज्झितानि. ३. B. reads वक्त्राणि for चक्राणि. ४. T. reads रक्तोत्पल° for °रत्नोपल°. ५. T. reads °धाम स्पृहणी° for °धारा मसृणी°. ६. T. reads प्रसुस्रुः for प्रसस्नुः. ७. T. reads समागतानि for विनिर्गतानि. ८. B. and T. read °दृप्ता° for °हृष्टा°. ९. K. reads प्रधावतामश्व° for प्रधावदश्वीय°. १०. B. reads अभ्युद्धतो for अभ्युद्गतो. ११. T. reads हताश्व° for भटास्त्र°. १२. B. reads °पङ्कापतितः and I. पङ्कापातितैः for °पङ्कोपचितैः.

भयङ्कराऽभूत्तरुणार्कबिम्ब-
सहस्रकीर्णेव [1]रणाङ्गणोर्वी ॥ १८ ॥

लूनाः समूलं सुभटासिपत्रैः
सहस्रशः शोणितशीकरार्द्रैः [2] ।
[3]उत्तालवैवस्वततालवृन्त-
विच्छित्तिर्मुहुः [4] करिकर्णतालाः ॥ १९ ॥

अन्योन्यकृत्तास्तरसा भटानां
नवातपाताम्रनखत्विषोऽग्रे ।
भुजा निपेतुः [5]समीक्षणेन
समौलिरत्ना इव पन्नगेन्द्राः ॥ २० ॥

अङ्गाद[6]सि-प्रास-पृषत्कभिन्नाद्
असृक्प्रवाहेषु भृशं वहत्सु ।
लीलागलद्गैरिकनिर्झराणां
गजैर्जगाहे कुलपर्वतानाम् ॥ २१ ॥

[7]क्ष्माग्रां बभुः खड्गपृथक्कृतानि
सहस्रशः शस्त्रभृतां शिरांसि ।
कालेन सङ्ग्रामस[8]रोन्तरालाद्
उत्खण्डितानीव सरोरुहाणि ॥ २२ ॥

---

१. K. reads रणाङ्गणश्रीः for रणाङ्गणोर्वी. २. I. omits रा in °शीकरार्द्रैः and T. reads शीकरशोणितार्द्रैः for शोणितशीकरार्द्रैः. ३. T. reads उतार्द्र° and K. °वेतालकरैकताल° for उत्ताल° and °वैवस्वततालवृन्त° respectively. ४. B. and T. read °माहुः for °मुहुः. ५. B. and I. read समितिक्षणेन for सममीक्षणेन. ६. B. reads अपि for असि°. ७. T. reads क्ष्मामभ्ययुः and I. क्ष्मामभ्यधुः for क्ष्माग्रां बभुः. ८. T. reads °शिरोन्तरालात् for °सरोन्तरालात्; while K. दैवेन for कालेन.

कबन्धकण्ठोच्छलदस्रवन्तः
समीपमेत्योपरि कङ्कयूथम्।
मुहूर्तमिद्धारुणरत्नदण्डम्
अदृश्यत च्छत्रमिवान्तकस्य ॥ २३ ॥

मुक्तैः समूहेन नभश्चराणां
कुम्भेषु चक्रैः करिणां पतद्भिः।
अस्ताचलव्यायतवप्रपाति-
पतङ्गबिम्बानुकृतिर्वितेने ॥ २४ ॥

पतद्भटं निर्दलिताश्ववारं
निकृत्तमत्तेभकरं क्षणेन।
व्यधायि विद्याधरसैनिकैस्तत्
सनागवीरैरसुरेन्द्रसैन्यम् ॥ २५ ॥

हंसैरिव स्मेरतटाः समन्तात्
परिच्युतैः कुञ्जरकर्णशङ्खैः।
वोढुं प्रवृत्ता भवदुत्तरङ्गा
झटित्यगाधा रुधिरस्रवन्ती ॥ २६ ॥

विद्याधर-व्यालभटावलुप्त-
धैर्येषु नश्यत्सु महासुरेषु।
विश्वाङ्कुशोनाम सुरारिसूनुर्
अथो रथेनाजिमहीं विवेश ॥ २७ ॥

१. B. reads °स्रुवन्तैः समेतमत्रोपरि for °स्रवन्तः समीपमेत्योपरि and T. has कबन्धकच्छस्रवन्तैः for कबन्धकण्ठोच्छलदस्रवन्तः. २. B. reads °सिद्धारुण° for °मिद्धारुण°. ३. K. reads क्षिप्तैः for मुक्तैः. ४. T. and I. read °राग° for °नाग°. ५. B. reads स्मेरभटाः for स्मेरतटाः. ६. I. झगित्यगाधाः and T. जगत्यगाधाः for झटित्यगाधाः. ७. K. reads °मुखं for °महीं.

आकर्णकृष्टात् धनुषः पतद्भिर्
बालेन्दुलेखाकृतिभिः पृषत्कैः ।
अरातिसैन्ये रणधीरवीरान्
भीरूनिवैको विमुखीचकार ॥ २८ ॥

तद्वीर्यनिर्वासितसौष्टवानां
विद्याधराणामपतन् करेभ्यः ।
धाराग्रलग्नद्विपकुम्भमुक्ताः
सबाष्पलेशा इव खड्गलेखाः ॥ २९ ॥

क्षणाद्दलन्तिस्म तदा हतानि
बलानि विद्याधर-पन्नगानाम् ।
सरित्पयांसीव निशाकरांशु-
पूरप्रवृद्धार्णवपीडितानि ॥ ३० ॥

न शेकतुस्तस्य गतिं निरोद्धुं
विद्याधरेन्द्रोरगराजपुत्रौ ।
रत्नाकरस्येव महेन्द्र-सह्या-
वसह्यवेगं प्रलयोत्थितस्य ॥ ३१ ॥

दोर्दण्डकण्डूतिमथास्य हर्तुम्
उद्भूलतं भूपतिना नियुक्तः ।

---

१. B. and I. read रणतः स for रणधीर°; while T. has :—

सुरारिसैन्ये रणवः स धीरान्
भीरूणि वैरो विमुखीचकार ॥.

२. K. reads °निर्वापित° for °निर्वासित°. ३. B. reads धरामलम° and T. and I. धाराम्रलम° both for धारामलम°. ४. I. reads °लेशाः for °लेखाः. ५. B. reads पतन्तिस्म for वलन्तिस्म. ६. K. reads °प्रबुद्धार्णवताडितानि for °प्रवृद्धार्णवपीडितानि. ७. K. reads °पुत्राः for °पुत्रौ. ८. T. reads °वेगप्रणयोत्थितस्य for °वेगं प्रलयोत्थितस्य. ९. I. reads हन्तुम् or हर्तुम् ; while T. भर्तुर् for the same.

जवाज्जगामाजिपथं रथेन
रमाङ्गदः कुण्डलितोऽग्रचापः ॥ ३२ ॥

तथोपलेभे समरोन्मुखस्य
नादेन वृद्धिः[1] शरजन्मनाऽस्य ।
चक्रे पदं बाष्पकणोत्करेण
यथा कपोलेष्वसुराङ्गनानाम् ॥ ३३ ॥

दूरात् सुपर्वारिसुतं रथेन[2]
स रंहसा सम्मुखमापतन्तम् ।
रुरोध तं बाणपरम्पराभिर्
यशोभटः कर्णमिवेन्द्रसूनुः ॥ ३४ ॥

विश्वाङ्कुशः सैल्कवचे मुमोच
वक्षःस्थले हैममथास्य बाणम् ।
तटेऽञ्जनश्यामतनौ[4] महाम्रेश[3]
शातह्रदं ज्योतिरिवाम्बुवाहः ॥ ३५ ॥

अलक्ष्यसन्धान-विमोक्ष-पातान्
यशोभटस्यात्तरुषोऽपि रोपान्[5] ।
मूर्च्छालुठत्सारथिराहताश्वो[6]
रथः शशंसासुरनन्दनस्य[7] ॥ ३६ ॥

विलासकाञ्चीमथ[8] कालरात्रेर्
उद्यत्क्षुधः पद्धतिमन्तकस्य ।

१. T. reads वृद्धी जरजं मनस्य for वृद्धिःशरजन्मनाऽस्य. २. T. reads °सुतारथने for °सुतं रथेन. ३. K. reads तत्° for सत्°. ४. T. and I. read °तनुः for °तनौ. ५. T. reads कोपान् for रोपान्. ६. B. reads °सारथिना हताश्वो for °सारथिराहताश्वो. ७. I. reads शशंसे for शशंस. ८. K. reads अपि for अथ.

मौर्वीं पृषत्केण रमाङ्गदस्य
चिच्छेद गीर्वाणरिपोस्तनूजः ॥ ३७ ॥

सन्नाभिबिम्बेन महाजिलक्ष्म्याः
वीरश्रियो विभ्रमनूपुरेण ।
संरभ्य[1] राहोरिव चक्रपाणिः
सोऽप्यस्य चक्रेण शिरश्चकर्त ॥ ३८ ॥

ननर्त विद्याधरसुन्दरीणां
गणो नदन्नूपुरमम्बरेऽथ ।
मौलौ शरक्षुण्णशिरस्त्ररत्ने[2]
चिक्षेप चास्यामरपुष्पवृष्टिम् ॥ ३९ ॥

दृष्टे शिरस्युत्फलिते[3] स्वसूनोर्
दिङ्मूललीनासु पताकिनीषु ।
वज्राङ्कुशः सम्मुखमापपात
पत्युर्विशामस्तगिरेरिवार्कः ॥ ४० ॥

मदाम्बुवर्षी[4] समरेऽभिधावन्
रेजे गजस्तस्य सहेमकक्ष्यैः[5] ।
भिन्नेऽन्तराले पवमाननुन्नस्
तमालनीलस्तडितेव मेघः ॥ ४१ ॥

पत्युः प्रसादस्मित[6]रज्जुकृष्टा
भटा विवृत्यास्य पुरो[7] बभूवुः ।

---

१. K. reads संरब्ध° for संरभ्य. २. B. reads °रत्नै for °रत्ने. ३. B. and K. read उत्फुलिते for उत्फलिते. ४. T. reads मदाम्बुवर्षः and I. मदाम्बुवर्षं for मदाम्बुवर्षी. ५. B. and K. read °कक्षः and T. °कक्ष्याः both for °कक्ष्यैः. ६. B. and T. read °स्मृति° for °स्मित°. ७. B. reads पुरे for पुरो.

स्वजीवितान्याजिमुखे विहातुम्
अत्युत्सुका भङ्गमलीमसानि ॥ ४२ ॥

आरुह्य चन्द्रः खमिवाभिरामं
नक्षत्रमालाभरणं गजेन्द्रम् ।
देवोऽपि तद्वैरितमो नियन्तुम्
अथ प्रतस्थे नवसाहसाङ्कः ॥ ४३ ॥

एकत्र पार्श्वे शशिखण्डनामा
विद्याधरेन्द्रो नृपतेर्बभूव ।
अरातिसेनानलिनीवनैक-
शीतांशुरन्यत्र यशोभटश्च ॥ ४४ ॥

स्फुरत्फणच्छत्रमणिप्रतान-
तेजश्छटाजर्जरितान्धकारः ।
अफल्गुवीर्यः फणभृत्कुमारो
ऽप्यग्रेऽभवत्तस्य स रत्नचूडः ॥ ४५ ॥

विधूतनिस्त्रिंशतरङ्गितानि
सबाणचक्रीकृतकार्मुकाणि ।
हतावशेषाणि पुरोऽस्य चेलुर्
बलानि विद्याधर-पन्नगानाम् ॥ ४६ ॥

रक्तासवक्षीबसहस्तताल-
वेतालतालीच्छलिताट्टहासः ।

---

१. K. reads जुहोतुम् अभ्युत्सुकापाय° for विहातुम् अत्युत्सुकाभङ्ग°; while B. reads अभ्युत्सुका for अत्युत्सुका. २. B. and I. read अभिरामनक्षत्र° for अभिरामं नक्षत्र°. ३. B. and K. substitute ऽथ for ऽपि. ४. B. reads निरोद्धुम् for नियन्तुम्. ५. B. reads °फणि° for °फण°. ६. B. reads °वीरः for °वीर्यः. ७. K. reads निर्धूत° for विधूत°. ८. K. reads रेजुः for चेलुः. ९. T. reads °तालोच्छलिताट्टभासः for °तालीच्छलिताट्टहासः.

महाभटानामसुनिर्व्ययेपेक्षम्
अन्योन्यमावर्तत सम्परायः[1] ॥ ४७ ॥

चक्राशिरे शस्त्रभृतां शिरस्सु
मिथः पतन्त्यः करवालवल्ल्यः ।
मुक्ताः सलीलं त्रिदशाङ्गनाभिर्
माला इवेन्दीवरपत्रमय्यः[2] ॥ ४८ ॥

केषाञ्चिदूहुः कवचानि शोभां
क्वचित्क्वचिल्लोहितपाटलानि[3] ।
खेलज्जयश्री[4]चरणारविन्द-
लाक्षारसेनेव नवाङ्कितानि[5] ॥ ४९ ॥

हृदि प्रविष्टै[6]रविशुद्धिमद्भिर्
अभूद्व्यथा काऽपि शरैः परेषाम् ।
दुरात्मनां साधुगुणैरिवाग्रे[7]
फलेन संयोगमुपेयिवद्भिः ॥ ५० ॥

परस्परापातजुषामसीनां[8]
धाराच्युतः संयति चूर्णरेणुः[9] ।
अवाप तापिच्छरुचिर्जयश्री-
विलासकालाञ्जनधूलिलीलाम् ॥ ५१ ॥

पर्यायजातोभय[10]सैन्यभङ्ग-
करालकोलाहलकातराणाम् ।

---

१. K. and T. read साम्परायः for सम्परायः. २. K. reads °पत्रशीर्षाः for °पत्रमय्यः. ३. K. reads °कल्मषानि for °पाटलानि. ४. B. reads °जलश्री° for °जयश्री°. ५. I. reads न वाञ्छितानि for नवाङ्कितानि. ६. B. reads प्रतिष्ठै° for प्रविष्टै° and T. I. and K. °रति° for °रवि°. ७. T. substitutes यथा for इव. ८. B. reads °ममीनां and in the margin °ममीषां for °मसीनां; while I. °मसीनं for the same. ९. I. reads °मूल° for °चूर्ण°. १०. B. reads °भव° for °भय°.

सुरारि-विद्याधरसुन्दरीणां
दोलेव शोक-प्रमदावभूताम् ॥ ५२ ॥

अथासुरेन्द्रद्विरदेन वेगाद्
अ[1]भ्युत्थितेनोद्गतदानधारम् ।
मध्येरणं मध्यमलोकभर्तुर्
जे[2]वान् मदान्धो जघटे गजेन्द्रः[3] ॥ ५३ ॥

महेभयोस्तत्र शिखाच्छलेन
प्रतिप्रहारं रदजः[4] कृशानुः ।
कोशेषु विद्युत्कपिशा मुहूर्तं
व्यधादिवाष्टापदपत्रवल्लीः ॥ ५४ ॥

मुहुः प्रजानामधिपेन गाढम्
आकृष्यमाणस्य शरासनस्य ।
द्विषद्वधारम्भविधौ गंभीरः[5]
क्रे[6]ङ्कारहुङ्कार इवोच्चचार ॥ ५५ ॥

परिस्फुरत्कुण्डलघृष्टपुङ्खास्[7]
तेन प्रयुक्ताः पृथुविक्रमेण ।
प्र[8]मृष्टकान्ताकुचपत्रलेखे
लेखारिवक्षस्यपतन् पृषत्काः ॥ ५६ ॥

अरातिमुक्तेषु त[9]तस्तनुत्रात्
वं[10]ह्निस्फुलिङ्गेषु समुल्लसत्सु[11] ।

१. B. reads अभ्युद्गतेन for अभ्युत्थितेन. २. T. reads जवात्मजोत्थो and I. जवान्मदे द्वे both for जवान् मदान्धो. ३. K. reads नरेन्द्रः for गजेन्द्रः. ४. B. reads न रजः° for रदजः.° ५. T. reads गंभीरं for गभीरः. ६. B. reads क्रेङ्कार-ओङ्कार°, K. and T. कोङ्कारहुङ्कार° and I. केङ्कारभुङ्कार° all for क्रेङ्कारहुङ्कार.° ७. K. reads °पत्रास् for °पुङ्खास्. ८. I. reads प्रघृष्ट° for प्रमृष्ट°. ९. B. reads हतात्तनुत्रात् and I. ततेस्तनुत्रात् for ततस्तनुत्रात्. १०. K. reads वह्निःस्फुलिङ्गेषु for वह्निस्फुलिङ्गेषु. ११. B. reads समुच्छलत्सु for समुल्लसत्सु.

मूर्तिर्बभासे वसुधाधिपस्य
निर्यत्प्रतापाग्निकणच्छटेव ॥ ५७ ॥

हिरण्मयी पार्थिवबाणपङ्क्तिर्
अत्युन्नते मूर्ध्नि महासुरस्य।
रेजे तरामञ्जनपर्वतस्य
लग्नेव तिग्मांशुमयूखमाला ॥ ५८ ॥

अभ्युद्गता भर्तुररातिबाण-
क्षुण्णेन्द्रनीलाङ्गदरेणुराजिः।
अदृश्यतोद्दामभुजास्पदस्य
पराक्रमाग्नेरिव धूमलेखा ॥ ५९ ॥

रमाङ्गदोऽप्युद्भ्रुकुटिः कृतास्त्रं
वीरं द्विषः पार्श्वगतं निहत्य।
शरैरलावीज्जयवैजयन्तीं
ज्योत्स्नासितां कीर्तिमिवासुरस्य ॥ ६० ॥

अधःस्थितोड्डामरवैरिपत्ति-
मुक्तेषु निर्लूनशरासनज्यः।
चिक्षेप चक्राण्यतिदीर्घबाहुः
स कालरात्रेरिव कङ्कणानि ॥ ६१ ॥

उत्प्लुत्य हेलाहतसम्मुखारिर्
विद्याधरेन्द्रोऽप्यसिना चकर्त।

---

१. T. reads मूर्तिर्बभौ स्म for मूर्तिर्बभासे. २. T. reads वीरद्विषत्° for वीरं द्विषः; while I. reads वीरद्विषः for the same. ३. I. reads शनैः for शरैः. ४. T. and I. read °स्थितेड्डामर° for °स्थितोड्डामर°. ५. K. reads °ज्यम् and I. °ज्याः both for °ज्यः. ६. I. reads उत्पत्य for उत्प्लुत्य; while T. reads वेगाहत° for हेलाहत° and I. substitutes मि for रि.

जगज्जयस्तम्भमिवोद्धुरस्य[1]
सुरद्विषः काञ्चनकेतुदण्डम् ॥ ६२ ॥
स रत्नचूडोऽपि तथा भुशुण्ड्या[2]
पिपेष वैरिद्विपकुम्भपीठम्[3] ।
सितातपत्रत्वमुदञ्चदापं[4]
यथास्य मुक्ताफलधूलिजालम् ॥ ६३ ॥
तुङ्गं दधत्कर्कशतामभीकः[5]
श्रीसिन्धुराजद्विपकुम्भयुग्मम् ।
पयोधरद्वन्द्वमिवाजिलक्ष्म्याश्
चक्रेऽर्धचन्द्राङ्कितमिन्द्रशत्रुः[6] ॥६४॥
परस्पराघट्टितदन्तकोटि-
भ्रष्टाग्निविशभ्रममादधन्ति[7] ।
रणाजिरे[8] लोहितरञ्जितानि
विरेजिरे[9] कुञ्जरमौक्तिकानि ॥ ६५ ॥
चिक्षेप पृथ्वीतिलके सुरारिर्
यांयामिषुं कोपं[10]कषायिताक्षः ।
तां तां जयाशामिव बाहुशाली
शरैः स तस्यार्धपथे लुलाव[11] ॥ ६६ ॥

---

१. K. reads इवागतस्य, T. इवोद्धुरस्य and I. इवोधुरस्यासुर° for इवोद्धुरस्य and इवोद्धुरस्य सुर° respectively. २. B. reads भुसुण्ड्या and T. भुसुण्ड्या both for भुशुण्ड्या; while the reading of I. is illegible. ३. T. reads °पीनम् for °पीठम्. ४. T. reads °मुदञ्चिताप for °मुदञ्चदाप. ५. T. reads अतीव for अभीकः ६. T. reads आजिलक्ष्म्या चक्रेऽर्ध° for आजिलक्ष्म्याश्चक्रेऽर्ध°; while T. आजिलक्ष्म्या चक्रे च for the same. ७. B. reads °मादहन्ति for °मादधन्ति, but in the margin °मादधन्ति; while T. reads °मादधन्ती for the same. ८. T. reads रणाहितो for रणाजिरे. ९. B. बभाजिरे, K. बिभाजिरे and I. विभाजिरे for विरेजिरे. १०. T. and I. read रोष° for कोप°. ११. B. and K. read चकर्त for लुलाव.

तयोस्तथेष्वासपरप्रकर्ष-
प्रत्यु[1]क्तकर्णार्जुनयोर्जयश्रीः ।
[2]सुवेलं-रत्नाकरयोरुदग्रा
चकार वेलेव गतागतानि ॥ ६७ ॥

पत्युः प्रजानामसुरे[3]श्वरोऽथ
किरीटमाणिक्यचयं जहार ।
मणिप्रसूनस्तबकप्रतानं
कल्पद्रुमस्येव युगान्तवातः ॥ ६८ ॥

क्रोधाद[4]थार्धशशलाञ्छनसोदरेण
बाणेन वासवरिपोर्नवसाहसाङ्कः ।
चिच्छेद राम इव विश्रवसः सुतस्य
पीनांसलोलमणिकुण्डलमुत्तमाङ्गम् ॥ ६९ ॥

आसन् मुखानि ककुभामभितोऽथ चि[5]त्र-
वादित्रनादलहरीमु[6]खरोदराणि ।
देवस्य च त्रिदिवपुष्पमयं पपा[7]त
माल्यं शिरस्य[8]सुरवैरिपुरन्ध्रिमुक्तम् ॥ ७० ॥

लक्ष्मीपतेः पृ[9]थुभुजद्वयमार्द्रसान्द्र-
ज्याघातलांछितमलांछितविक्रमस्य ।

---

१. K. reads प्रयुक्त° and T. प्रस्तुत° for प्रत्युक्त°. २. T. reads सुचेल° for सुवेल°. ३. T. and I. read °मसुराशुगो° for °मसुरेश्वरो°. ४. T. reads अस्त्र for अर्ध°. ५. T. reads विचित्र° for ऽथ चित्र°. ६. B. reads मुखरीकृतानि for मुखरोदराणि. ७. B. reads न्यपतत्सम् and I. न्यपतत् for पपात, but I. in the margin पपात. ८. I. reads अनरवैरि° for असुरवैरि°. ९. B. reads °तद्द्वयम् for °भुजद्वयम्; while K. लक्ष्मीपतेरथ for लक्ष्मीपतेः पृथु°.

अ[1]त्यादरागतजितोर्जितवैरिलक्ष्मी-
पादाब्जयावकनिषक्तमिवा[2]ऽऽचकाशे ॥ ७१ ॥

तस्याग्रतः कनककुण्डलताड्यमान-
गे[3]ण्डस्थलीलुलितकुङ्कुमपत्रलेखाः ।
विद्याधरोरगकुरङ्गदृशः प्रमोद-
सा[4]न्द्रोच्छलध्वनि जगुर्जयमङ्गलानि ॥ ७२ ॥

स्मित्वा यशोभटकरार्पितचापयष्टिर्
उन्मुक्तरत्नकवचः ख[5]चरेश्वरेण ।
उ[6]द्भिन्नमौक्तिकनिभश्रमवारिबिंदुर्
देवो ममार्ज मुखमंशुकपल्लवेन ॥ ७३ ॥

द[7]त्ताभयोपनतपौरशतार्थ्यमाण-
र[8]त्नोपधामथ स रत्नवतीं प्रविश्य ।
तं संयुगस्फुटपरीक्षितशौर्यसारं
राज्ये रिपोः फणिकुमारकमभ्यषिञ्चत् ॥ ७४ ॥

मूर्तं मनोरथमिवोपवनात् सकन्दम्
आदाय तत् कनककोकनदं नरेन्द्रः ।

---

१. T. reads अत्यागरागजितोर्मितवैरिलक्ष्मीम् for अत्यादरागतजितोर्जितवैरिलक्ष्मी° omitting one letter. २. T. reads °निषिक्त° and I. °निष्ठित° for °निषक्त°; while K. ऽऽबभासे for ऽऽचकाशे. ३. I. reads °गण्डस्थलैर् for °गण्डस्थली°. ४. I. reads °मन्द्रो° for °सान्द्रो°; while T. mutilates four letters at the beginning of this line. ५. T. mutilates two letters after °कवच:. ६. B. reads उन्मुक्त° for उद्भिन्न°. ७. T. reads :—

दत्ताभयोपरतपौरशर्थमाण-
रत्नोपशामधनरत्नवतीं---।

for दत्ताभयोपनतपौरशतार्थ्यमाण-
रत्नोपधामथ स रत्नवतीं ....।,

but one letter is omitted; while I. reads °परत° for °पनत° and K. °नगर° for the same. ८. I. reads °रत्नोपशार्थमथ रत्नवतीं for °रत्नोपधामथ स रत्नवतीं

आदातुमीप्सितमहीन्द्रसुतेति रत्नम्
अभ्युत्सुकस्तदनु भोगवतीं प्रतस्थे ॥ ७५ ॥

देवः साहसिकोऽप्यमन्दमुरजध्वानानुमेयोत्सवाम्
उन्नम्रैः परितो महीं मणिगृहैरुत्तम्भयन्तीमिव ।
तामत्युन्नतरत्नतोरणशिखाप्रेङ्खोलमुक्ताफल-
प्रालम्बोच्छलदच्छकान्तिनिकरस्मेरामवापत् पुरीम् ॥ ७६ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये हेमकमलहरणो नाम सप्तदशः सर्गः ॥ १७ ॥

---

१. K. and I. read अमन्द्र° for अमन्द°; while B. ऽथ सान्द्र° for ऽप्यमन्द°. २. T. mutilates three letters at the beginning of this line. ३. B. reads °प्रेङ्खोल° for °प्रेङ्खोल°. ४. B. reads °प्रारम्भो° for °प्रालम्बो°; while T. °च्छलत्° for °च्छलत्°. ५. B. in the margin and K. reads अवाप्तः for अवापत्. ६. B. reads इति मृगाङ्कसूनोः परिमलापरनाम्नः कृतौ नवसाहसाङ्कचरिते १७ सर्गः, I. इति परिमलस्य नवसाहसाङ्कचरिते सप्तदशः सर्गः, and T. इति परिमलपरनाम्नि महाकवेः कालिदासस्य कृतौ साहसाङ्कचरिते महाकाव्ये हेमकमलहरणः सप्तदशः सर्गः.

# अथाष्टादशः सर्गः ।

फणिराजदर्शनम् ।

तं विष्टपत्रितयकण्टकदृष्टसारम्  
अभ्यागतं नृपतिमुद्गतगाढहर्षः ।  
प्रत्युद्ययावधिपतिः फणिनामनर्घ-  
रत्नार्घपाणिरशनैरथ शङ्खपालः ॥ १ ॥

पुरप्रवेशः ।

आदाय सादरफणीश्वरदत्तमर्घ्यम्  
अर्घ्यः सतां स बहिरेव निवेश्य सैन्यम् ।  
देवोऽविशद्विनयवान् पुरमग्रयायि-  
विद्याधराधिप-रमाङ्गद-रत्नचूडः ॥ २ ॥

उत्सृज्य गीतमसमाप्य विलासलास्यम्  
अङ्कादपास्य सहसा मणिवल्लकीं च ।  
अत्युन्मनास्तदवलोकनकौतुकेन  
वातायनान्यधिरुरोह पुरन्ध्रिलोकः ॥ ३ ॥

उत्क्षिप्य वेपथुमता करपल्लवेन  
वातायनाग्रमणिमौक्तिकजालकानि ।

---

१. T. reads °दृष्ट° for °दृष्ट°. २. T. omits three letters after °रत्नार्घ and reads °पाणीरशनैः for °पाणिरशनैः; while K. substitutes शङ्खचूडः for शङ्खपालः. ३. B. reads हिरण्यवान् for विनयवान्. ४. T. reads उत्सिज्य for उत्सृज्य. ५. B. reads अत्युत्मनः for अत्युन्मनाः. ६. T. and I. read °पङ्कजेन for °पल्लवेन. ७. T. omits two letters between आ and मि.

स्मिंस्त्वैकया स विलसन्मकरावचूल-
लीलालवाञ्चितविलोचनेमालुलोके ॥ ४ ॥
उद्यद्विवृत्तकरवेणिकया नृपेन्दौ
तस्मिन् स्मरोल्लसितजृम्भिकया कयाचित्।
मुक्ता मुहुर्विबुधसिन्धु-कलिन्दकन्या-
किर्मीरवारिलहरीसुहृदः कटाक्षाः ॥ ५ ॥
वाचालरत्नवलया सविलासमस्मिन्
निक्षिप्य कापि नवमौक्तिकलाजमुष्टिम्।
तत्ताडितांसतटपार्थिवदत्तदृष्टिर्
दीर्घेक्षणा किमिव न त्रपया चकार ॥ ६ ॥
वक्षो दधानममराद्रिशिलाविशालम्
आजानुबाहुमवलोक्य नरेन्द्रचन्द्रम्।
चित्तोपनीतपरिरम्भसुखातिसान्द्रम्
अन्या पयोधरभरे पुलकं बभार ॥ ७ ॥
आलोक्य दर्पणतले प्रतिमागतं तम्
'आत्तो मयैष' इति कापि कृतोत्सवाऽभूत्।
मुग्धा गतेऽथ पुरतोऽत्र तदीयबिम्बे
शून्यात्मदर्शविधुरेन्दुमुखी बभूव ॥ ८ ॥

१. T. reads स्मरत्वैकया for स्मिंस्त्वैकया; while B. विकसन्° for विलसन्° and T. विलसद्° for the same. २. B. reads °विलोकित° and T. °विलोकन° for °विलोचन°. ३. K. reads नृपाले for नृपेन्दौ and T. नृपेन्द्रौ for the same. ४. T. mutilates one letter between सु and दः. ५. T. reads विक्षिप्य for निक्षिप्य. ६. K. reads °माल° and T. °मालमुष्टम् for °लाज° and °लाजमुष्टिम् respectively. ७. K. reads त्रपयाऽवभूव for त्रपया चकार; while B. नेत्रपथा for न त्रपया. ८. T. reads वक्षो निदधान° for वक्षो दधान°. ९. B. substitutes °सार्द्रम् for °सान्द्रम्. १०. T. reads °हरे for °भरे. ११. T. omits three letters after मुग्धा and reads पुरोऽत्र omitting one letter. १२. I. reads °बिम्ब° for °बिम्बे.

इत्यापतन्मदनबाणपरम्पराणाम्
उन्मीलिताङ्गवलनश्लथमेखलानाम् ।
एणीदृशां विचरति स्म स राजहंसः
[२]पारोल्लसन्नवरसोर्मिषु मानसेषु ॥ ९ ॥

नायकवर्णनम् ।

सङ्गीतवेश्मनि फणीश्वरचारणानां
गीतिष्वजस्रमिह शुश्रुम यद्यशांसि ।
यातः स एव नयनातिथितामयं नः
पुण्यैरहो बत नृपो नवसाहसाङ्कः ॥ १० ॥

कान्तिच्छटाच्छुरितदिक्तट एष देवो
जीयाज्जगन्ति परमारकुलप्रदीपः ।
उन्मूल्य सम्प्रति सुरारितमः समूलं
येनाहिविष्टपतले विहितः प्रकाशः ॥ ११ ॥

हन्तैष पन्नगपतेरतुलप्रतिज्ञा-
प्राग्भारसागरसमुत्तरणैकपोतः ।
उत्पाकमेष च फलं फणिराजकन्या-
चित्ते चिरं कृतपदस्य मनोरथस्य ॥ १२ ॥

---

१. T. has the following reading:—

इत्यापत - - - - - - - - - -
- - - - - - - - - श्लथमेखलानाम् ।
एणीदृशां वि - - - - - - - - - -
पर्युल्लसन्नपरसोर्मिसुमानसेषु ॥ ९ ॥.

२. I. reads पर्युल्लसत्° for पारोल्लसत्°. ३. K. reads °वेश्मसु for °वेश्मनि. ४. T. reads °दिक्तत एष for °दिक्तट एष. ५. T. reads °भाग° for °भार° and °समुत्तरणैः कपोतः for °समुत्तरणैकपोतः; while B. °सादर° for °सागर°, but in the margin substitutes ग for द. ६. B. reads तत्पाक° for उत्पाक°.

एतद्यशोभटकरे कनकाम्बुजं तत्
लीलाव्रतंसमचिराद्विरचय्य येन।
प्रत्युप्तकल्पतरुपल्लवमेष पाणिम्
आदास्यते नृपतिरद्य शशिप्रभायाः ॥ १३ ॥

हाटकेश्वरदर्शनम्।

सान्द्रानुरागपिशुनाः परशुः[1] परेषाम्
आकर्णयन्निति स[2] पौरजनस्य वाचः।
श्रीहाटकेश्वर इति प्रथितस्य तुङ्गम्
अग्रे[3] ददर्श मणिमन्दिरमिन्दुमौलेः ॥ ४ ॥

कुलकम्[4]।

तत्र प्रविश्य सकृतानतिरादिदेवम्
आनर्च कल्पविटपि[5]प्रभवैः प्रसूनैः।
स्तोतुं कृताञ्जलिपुटः कुटजावदात-
दन्तांशुपल्लवितवागुप[6]चक्रमे च ॥ १५ ॥

हाटकेश्वरस्तुतिः।

अन्तर्जटापिहितसोमसुरापगाय
प्रच्छन्नपञ्चशरशासनलोचनाय।
तीव्रव्रत[7]ग्लपितशैलसुतास्वरूप-
विज्ञाननर्म[8]पटवे बटवे नमस्ते ॥ १६ ॥

---

१. B. reads पुरुषः for परशुः. २. T. mutilates one letter before पौरजनस्य. ३. T. mutilates three letters after अग्रे. ४. Except I. all others do not insert this. ५. B. reads °विटप° for °विटपि° and K. and T. °प्रसवैः for °प्रभवैः. ६. T. reads °पङ्कप° for °वागुप°. ७. K. reads तीव्रातप° for तीव्रव्रत°; while T. omits one letter after ती. ८. K. reads °मर्म° for °नर्म°; while T. °पटलैः पटवे and I. °पटवे पटवे for °पटवे बटवे.

अत्यादरानतसुरासुरमौलिरत्न-
नानामरीचिखचिताङ्घ्रिसरोरुहाय।
देहार्धवर्तिगिरिजाविहिताभ्यसूय-
सन्ध्याप्रणामविषमाञ्जलये नमस्ते ॥ १७ ॥

नीरन्ध्रसिन्धुजलसिक्तकपालमुक्त-
रत्नाङ्कुरस्य करणीं विधुरातनोति।
मौलौ सदैव भवतो भवभेदकर्तुर्
निर्दग्धभास्करमहाय नमोऽस्तु तस्मै ॥ १८ ॥

कन्दर्पदर्पशमनाय कृतान्तहर्त्रे
कर्त्रे शुभस्य भुजगाधिपवेष्टनाय।
उर्वी-मरुद्-रवि-निशाकर-वह्नि-तोय-
याज्याम्बरोग्रवपुषे सुपुंषे नमस्ते ॥ १९ ॥

---

१. B. reads अन्यादरा° for अत्यादरा°. २. T. reads °रचिताङ्घ्रि° for खचिताङ्घ्रि°. ३. T. mutilates three letters after °गिरिजा°. ४. The following three stanzas do not occur in T. and I.:—

नीरन्ध्रसिन्धुजलसिक्तकपालमुक्त-
रत्नाङ्कुरस्यं करणीं विधुरातनोति।
मौलौ सदैव भवतो भवभेदकर्तुर्
निर्दग्धभास्करमहाय नमोऽस्तु तस्मै ॥ १८ ॥
कन्दर्पदर्पशमनाय कृतान्तहर्त्रे
कर्त्रे शुभस्य भुजगाधिपवेष्टनाय।
उर्वी-मरुद्-रवि-निशाकर-वह्नि-तोय-
याज्याम्बरोग्रवपुषे सुपुषे नमस्ते ॥ १९ ॥
नीरन्ध्रभूतिधवलाय गजेन्द्रकृत्ति-
संवीतदेहकवलीकृतपन्नगाय।
निर्दग्धदानवकुलाय विपक्षवैक-
कार्याय कारणनुताय नमोऽस्तु तुभ्यम् ॥२० ॥.

५. B. has कर्तु -- ग्धभास्कर --- नमोऽस्तु. ६. B. in the margin reads तु-भ्याम् for तस्मै. ७. B. reads सुपुषे for सुपुषे.

नीरन्ध्रभूतिधवलाय गजेन्द्रकृत्ति-
संवीतदेहकवलीकृतपन्नगाय।
निर्दग्धदानवकुलाय विपत्क्षयैक-
कार्याय कारणनुताय नमोऽस्तु तुभ्यम्॥ २०॥

ते ते येमेव किल वाङ्मयसागरस्य
पारं गताः प्रणवमात्मविदो वदन्ति।
तस्मै समाहितमहर्षिविनिग्रहह्य-
हृत्पुण्डरीकविहितस्थितये नमस्ते॥ २१॥

उत्तंसितेन्दुशकलाय कपाल-जूट-
संघट्टितोर्मिमुखराम्बरनिर्झराय।
भस्माङ्गरागशुचये विकचोपवीत-
व्यालेन्दुमौलिमणिदीधितये नमस्ते॥ २२॥

नास्त्रं न भस्म न जटा न कपालदाम
नेन्दुर्न सिद्धतटिनी न फणीन्द्रहारः।
नोक्षा विषं न दयिताऽपि न यत्र रूपम्
अव्यक्तमीश किल तद्दधते नमस्ते॥ २३॥

नागराजगृहागमनम्।

स्तुत्वेत्यवन्तिपतिरिन्दुकलावतंसं
तम्मन्दिरात् सहचरैस्सह निर्जगाम।

---

१. K. reads तस्मै for तुभ्यम्. २. K. reads यमेन for यमेव. ३. B. reads प्रणव° for प्रणव°; while I. reads °माद्य° for °मात्म° and T. °मात्म° for the same. ४. B. substitutes °कूट° for °जूट°. ५. B. has संघट्टितोर्मि-मुखाम्बरनिम्नगाय for संघट्टितोर्मिमुखराम्बरनिर्झराय. ६. T. reads °दीधितये for °दीधितये. ७. T. has °दाम्ने च दुसिद्धु° for °दाम नेन्दुर्न सिद्ध°. ८. T. reads अव्यक्त° for अ-व्यक्त°; while K. तद्धरते for तद्दधते.

अन्तर्निवेशितहरिन्मणिवेदि वल्गन्-
नागाङ्गनं स फणिराजगृहं जगाम ॥ २४ ॥

तत्रावतीर्य रथतः स रमाङ्कदात्त-
पाणिः समुच्छलितमङ्गलतूर्यघोषे ।
उन्निद्रसान्द्रकुसुमप्रकरावकीर्ण-
माणिक्यकुट्टिमतले मसृणं विवेश ॥ २५ ॥

अन्योन्यपल्लवितताद्विजयप्रशंसः
प्राप्तस्थितिर्विकटकाञ्चनविष्टरेषु ।
पद्मच्छदायतदृशा ददृशेऽथ तस्मिन्
एकत्र तेन मिलितः फणिराजलोकः ॥ २६ ॥

तत्कृतः सत्कारः ।

तस्मिन् गते नयनगोचरमुत्तृतारी
बद्धाञ्जलिर्झटिति पन्नगराजसंसत् ।
मन्दाकिनीव परितो हरिणावचूड-
व्यालोककुड्मलितकाञ्चनपङ्कजाऽभूत् ॥ २७ ॥

न्यञ्चच्छिखाभरणभासुरपद्मराग-
रोचिच्छटाघटिततत्फणरत्नकान्तिः ।

---

१. T. and I. substitute च for स; while T. reads वर्ग° for वल्गन्°. २. I. reads रमाङ्कमात्त° for रमाङ्कदात्त°; while T. has तत्राय -- रथतः स for तत्रावतीर्य रथतः स. ३. T. reads °समुच्चलित° and K. सशाच्छलित° for समुच्छलित°. ४. T. reads मसृणां for मसृणं; while B. reads in the preceding line °सार्द्र° for °सान्द्र°. ५. K. reads वितत° for विकट°. ६. T. substitutes च for ऽथ and mutilates the following :—

एकत्र तेन मिलितः फणिराजलोकः ॥ २६ ॥
तस्मिन् गते नयनगोचरमुत्तृतारी
बद्धाञ्जलिर्झटिति पन्नगराजसंसत् ।.

७. B. K. and I. substitute ल for ड. ८. T. reads °कुङ्कुमा for °पङ्कजा. ९. T. reads भन्यत्° for न्यञ्चत्°. १०. T. substitutes °छुरित° for °घटित° and I. °राज° for °रत्न°; while T. and I. read °कान्ति for °कान्तिः.

राजन्यमौलिमणिचुम्बितपादपीठैः
तस्मै चकार स महाभिजनः प्रणामम् ॥ २८ ॥

प्रद्युम्नरत्नमभितः प्रमदावकीर्णम्
मुक्त्वा चतुष्कमुरगेन्द्रनिदेशितं सः ।
अध्यास्त सादरजरत्फणिकल्पिताशीस्
तन्मध्यवर्तिकनकासनमुन्नतांसः ॥ २९ ॥

वत्सां प्रजानय ममेति शनैर्विसृज्य
नेपथ्यनीलमणिवेश्मनि रत्नचूडम् ।
तत्रासनद्वयमदापयदस्य पार्श्वे
विद्याधराधिप-यशोभटयोः फणीन्द्रः ॥ ३० ॥

स्वर्णासने स्वयमथाच्छफणातपत्र-
रत्नप्रदीपशतजर्जरितान्धकारः ।
लोकत्रयैकतिलकस्य स नातिदूरे
देवस्य दारितमहेन्द्ररिपोर्न्यषीदत् ॥ ३१ ॥

स्थित्वैकतो युवतिमङ्गलगीतिमत्र
शृण्वन् स विन्ध्यतटदृष्टचरैः कुरङ्गः ।
चित्रे[12] निवेशित इवाथ यशोभटेन
स्मित्वा सविस्मयमसूच्यत पार्थिवाय ॥ ३२ ॥

---

१. B. reads राजेन्दु° for राजन्य°. २. T. substitutes °पद्म: for °पीठः. ३. T. reads °माणिक्यः for °मभितः; while I. and T. read °वितीर्णम् for °वकीर्णम्. ४. K. T. and I. read °मुक्ता° for °मुक्त्वा. ५. T. reads प्रजातय for प्रजानय. ६. T. has नेपथ्यरत्नमणिवेश्मनि – – चूडम् for नेपथ्यनीलमणिवेश्मनि रत्नचूडम्. ७. T. reads वेत्रासन° for तत्रासन°. ८. T. has °माश्च for °मथाच्छ° omitting one letter. ९. T. reads °जर्झरिता° for °जर्जरिता°. १०. K. reads °गीत° for °गीति°. ११. K. reads °दृष्टचरं for °दृष्टचरः. १२. B. reads चित्ते for चित्रे. १३. T. has असू – त पार्थिवाय.

शशिप्रभादर्शनम् ।

अत्रान्तरे प्रमदलोलदृशा नृपेण
दूराददर्शि फणिराजसुता ऽभियान्ती[1] ।
तन्वी[2] शिरीषसुमनःसुकुमारमूर्तिर्
देवस्य कार्मुकलतेव मनोभवस्य[3] ॥ ३३ ॥

ज्योत्स्ना[4]सिताम्बररुचिस्नपिताननेन्दुर्[5]
मात्रा[6] ऽचिरोद्गतयवाङ्कुरकर्णपूरम् ।
मुक्त्वो[7]ज्ज्वलं ललितकौतुककङ्कणं च
वेषं विवाहसमयोचितमुद्वहन्ती ॥ ३४ ॥

सख्या कयापि लिखितं मदनानलैक-
धूमावलीवलयसंशय[8]मर्पयन्तम् ।
एकान्तकान्तमसितागरु[9]पत्रभङ्गम्
आबिभ्रती लवलि[10]पाण्डुतले कपोले ॥ ३५ ॥

आत्मप्रसाधनमनङ्गविलासवेश्म
लीलानिधान[11]मवधिर्नयनोत्सवस्य ।
लावण्यसंवलितमङ्गकमुद्वहन्ती
शृङ्गारदुग्ध[12]जलधेरधिदेवतेव ॥ ३६ ॥

---

१. B. reads प्रयान्ति for ऽभियान्ती. २. B. reads शरीरशिरीष for तन्वी शिरीष.° ३. B. reads मनुभुवस्य, but in the margin मनोभवस्य. ४. T. mutilates first eight letters in this line. ५. B. and K. read नरेन्द्र° and I. has नेरन्द्र° for °ननेन्दुर्; while T. does not insert the Repha. ६. B. reads मास्ता, but in the margin मात्रा. ७. B. reads मुक्त्वो,° but in the margin मुक्त्वो° and I. मुक्तो° for मुक्त्वो°; while T. मुक्तोज्ज्वला for मुक्त्वोज्ज्वलं. ८. T. mutilates six letters before संशय. ९. I. reads °गुरु° for °गरु°. १०. T. reads लवति° for लवलि° and B. शवलि° for the same. ११. T. reads °विधान° for °निधान°. १२. K. and I. read °मुग्ध° and T. °दग्ध° both for °दुग्ध°; while T. has in the preceding line ला - - - वलित°.

सा पाटलाविधुतचामरमारुतेषत्-
[१]ध्यानर्तितालकलता सहिता सखीभिः ।
नालिस्फु[२]टक्कणितनूपुरमाकुलानि
किञ्चि[३]द्विलम्ब्य द[४]धती त्रपया पदानि ॥ ३७ ॥
कु[५]लकम् ।

नायिकया नायकदर्शनम् ।

उत्पक्ष्मणा निरुपमोल्लसितप्रमोद-
विस्तारलङ्घितविला[६]ससरोरुहेण ।
सान्द्रस्मरज्वरपिपासितया त[७]यापि
दूरादपायि नयनाञ्जलिना नरेन्द्रः[८] ॥ ३८ ॥

माल्यवतीवाक्यम् ।

व्रीडावनम्रमुखपद्ममुपागतायां
तस्यां पितुः कनकविष्टरभाग[९]भाजि ।
माल्यादिकल्पितयथोचितसत्क्रियान्ते
तं मालवेन्द्रमिति[१०] माल्यवती जगाद ॥ ३९ ॥
राजन् महीतलमृ[११]गाङ्क विलम्बसे किम्
अद्यापि तूर्णममुना स्वभुजार्जितेन ।

---

१. B. reads °ध्यावर्तिता° for °ध्यानर्तिता°; while T. reads °सुता सहिता सखीभ्यः for, °लता सहिता सखीभिः. २. T. reads °स्फुटत्° for °स्फुट°. ३. T. mutilates three letters after किञ्चि. ४. T. reads दरती for दधती. ५. T. does not insert this. ६. I. reads °वतंस and T. च तंस° for °विलास°. ७. T. reads ऽनयापि for तयापि. ८. T. mutilates last three letters. ९. I. reads °भार° for °भाग°. १०. B. substitutes अथ for इति. ११. T. mutilates the following :—

. . . . . . . . . . . विलम्बसे किम्
अद्यापि तूर्णममुना स्वभुजार्जितेन ।
हेमाम्बुजेन विरचय्य वतंसमस्याः
पूर्ण . . . . . . . . . . ॥ ४० ॥

हेमाम्बुजेन विरचय्य वतंसमस्याः
पूर्णप्रतिज्ञमुरगाधिपतिं विधेहि ॥ ४० ॥

कमलावतंसः ।

उक्ते[1] तयेत्यकृत काञ्चनपुष्करं तत्
यावत् स कर्णशिखरे[2] फणिराजपुत्र्याः ।
तावद् विहाय मृगरूपमुदारमूर्तिर्
अग्रे बभूव पुरुषोऽस्य सहेमनेत्रः[3] ॥ ४१ ॥

पुरुषम्प्रति प्रश्नः ।

कस्त्वं मृगः[4] कथमभूरिति पार्थिवेन
पृष्टः स विस्मयसमुत्सुकमानसेन[5] ।
इत्यब्रवीदुरगनेत्रपरम्पराभिर्
आपीयमानवपुरुक्तिमवन्तिनाथम्[6] ॥ ४२ ॥

प्रतीहारस्य वृत्तान्तः ।

कैलासशैलवसतेर्गिरिशोपरोधात्
द्वारप्रवेशविनिषेधकषायितेन ।
शप्तोऽस्मि कण्वमुनिना[7]ऽयमहं पितुस्ते
श्रीहर्षदेवनृपतेः प्रतिहारपालः ॥ ४३ ॥

---

१. B. and K. read उक्तः for उक्ते. २. K. reads केशशिखरे for कर्णशिखरे, while T. mutilates after या :—

' ' वत् स कर्णशिखरे फणिराजपुत्र्याः ।
तावद् विहाय मृगरूपमुदारमूर्तिर्
अग्रे बभूव पुरुषोऽस्य सहेमनेत्रः ॥ ४१ ॥.

३. B. reads °पात्रः and in the margin °वेत्रः. ४. B. reads मृगाकृतिरभूत्य, K. मृगाकृतिरभूरिति and T. मृगः कथमभूविति for मृगः कथमभूरिति. ५. B. reads समुत्सुकसविस्मय° for स विस्मयसमुत्सुक°; while T. substitutes °चेतसेन for °मानसेन. ६. K. and T. read °रित्थ° for °रुक्ति°. ७. T. reads शप्तो मृगण्डु° and I. शप्तो मृगण्ड° for शप्तोऽस्मि कण्व°.

रोजा फणीन्द्रदुहितुः कनकारविन्दं
कर्णे करिष्यति यदा नवसाहसाङ्कः ।
स्वं रूपमाप्स्यसि तदेति समादिदेश
शापान्तमेष विहितानुनयो महर्षिः ॥ ४४ ॥

तद् वासवारिविजयोत्थमिदं यशस्ते
मत्वैकपिङ्गलगिरेरवतंसयामि ।
उक्त्वेति दिव्यकुसुमैरवकीर्य मौलौ
पातालमल्लमनिलस्य पथा जगाम ॥ ४५ ॥

---

१. T. reads रामा for राजा. २. T. and I. read ममादिदेश for समादिदेश. ३. T. reads °शास° for °वास°. ४. T. ends here; it inserts after पातालमल्ल the following portion :—

······ मुखमंशुकपल्लवेन ।
वृत्ताभयोपरतपौरशताप्यमाण-
रत्नोपशामथ स रत्नवतीं प्रविश्य ॥ ४३ ॥

तं संयुगस्फुटपरीक्षितशौर्यसारम्
राजेरिहः फणिकुमारकमभ्यषिञ्चत् ।
मूर्तं मनोरथमिवोपवनात् सकन्दम्
आशाव तत् कनककोकनदं नरेन्द्रम् ॥ ४४ ॥

आशातुमीप्सितमहीन्द्रसुततिरत्न-
मभ्यु – – – – – – – – ।
– – – द्रमुरजध्वनानुमेयोत्सवाम्
उच्चैः परितो महर्मणिमहैरुत्तम्भयन्तीमिव ।
– – रत्नतोरणशिखाप्रेङ्खोलम् – – ।
– – – – – – रामवापत् पुरीम् ॥

इति श्रीपरिमलकालिदासविरचिते साहसाङ्कचरिते हेमकमलेहरणः सप्तदशः सर्गः॥
श्रीव्यंकटेशा नमः ॥ श्रीत्यागेशाय मंगळं ॥ शुभमस्तु ॥

The above-mentioned portion is already inserted at the end of the 17th Canto, and the mistakes in it I have not corrected but given here as they exist in the manuscript.

विवाहविधिः ।

तूर्यस्वनेषु विलसत्सु पठत्स्वमन्दं
बन्दिष्वनीयत फणीन्द्रपुरोधसा च ।
कोणावसक्तजलपूरितरत्नकुम्भां
वेदिं तयासह स मध्यमलोकपालः ॥ ४६ ॥

अभ्युद्गतार्चिरनलोज्झितधूमराजि-
श्यामीभवत्कनकतामरसावतंसाम् ।
तस्यां यथाविधि स मालवपुष्पकेतुः
कन्यामहेः कुवलयाश्व इवोपयेमे ॥ ४७ ॥

आनीतया झटिति रूपमदृष्टपूर्वम्
अङ्गेन पुष्पशरभङ्गितरङ्गितेन ।
भातिस्म शन्तनुरिव त्रिदिवस्रवन्त्या
पातालचन्द्रकलया स तया समेत्य ॥ ४८ ॥

फणिपतिवाक्यम् ।

निर्गच्छदच्छरुचिनिर्भरमंशुकेन
संच्छादितं किमपि पाणितले दधानः ।
ऊचे तमित्यधिपतिः फणिनामुदञ्चत्-
दन्तांशुशारितरदच्छदरत्नकान्तिः ॥ ४९ ॥

---

१. In I. the second letter at the beginning of this line is quite illegible. It may be ग, ध, व or य, the Rêfa is already omitted. २. K. reads पठत्स्व-मन्दम् for पठत्स्वमन्दम्. ३. B. and K. read °अवसिक्त° for °अवसक्त°. ४. I. reads °उत्थित° for °उज्झित°. ५. I. reads °श्यामी° for °श्यामी°. ६. I. reads °तंसाम् for °तंसाम्. ७. K. reads यथाविभव° for यथाविधि. ८. B. reads भिवद्य° for विविध°. ९. K. reads नरेन्द्रः for समेत्य. १०. B. and K. read संवेष्टितं for संच्छादितं. ११. K. reads °सारित° for °शारित°; while B. and K. °दन्तकान्तिः for °रत्नकान्तिः.

यद्दीयते तव न तादृशमस्ति किञ्चित्
गेहे[1] ममात्र नृपते नवसाहसाङ्क ।
कोशप्रतिष्ठितनिधानशतं यतस्त्वाम्
ऐश्वर्यनिर्जितपुरन्दरमामनन्ति ॥ ५० ॥

तत् स्फाटिकं स्वमिव[2] शुद्धमिदं गृहाण
त्वष्टृप्रयत्नघटितं शिवलिङ्गमेकम्[3] ।
आकारमर्ध[4]वनितावपुषः पुरारेर्
यस्यान्तरे सुकृतिनो हि विलोकयन्ति ॥ ५१ ॥

व्यासः पुरा किल पुराणमुनेः प्रपेदे
तस्मात् किलादिकविपाणितलं जगाम ।
लेभे ततोऽपि भगवान् कपिलो महर्षिस्
सानुग्रहेण मम[5] चेदमदायि तेन ॥ ५२ ॥

**शिवलिङ्गार्पणम् ।**

उक्त्वेत्यनर्घमतिपावनमर्पितं तद्
अन्तःस्फुटैकशिवरूपमहीश्वरेण[6] ।
पूर्णेन्दुकान्ति सहसा निगृहीतशत्रुर्
जग्राह पिण्डितमिव स्वयशो नरेन्द्रः ॥ ५३ ॥

तत्राथ दिक्तटपरिस्खलित[7]प्रवृत्त-
सीमन्तिनीचटुलनूपुरकाञ्चिनादः ।

१. K. reads लोके मयात्र for गेहे ममात्र. २. K. reads स्वयश एवमिदं for स्वमिव शुद्धमिदं. ३. I. reads एव for एकम्. ४. B. reads आकारमेव for आकारमर्ध°. ५. I. has च मसेद° for मम चेद°. ६. B. reads °महेश्वरेण for °महीश्वरेण. ७. I. reads °परिच्छालित° for °परिस्खलित°.

कोऽप्युच्छलत्पटह-वंश-हुडुक्क-शङ्ख-
वीणा-मृदङ्ग-मुरजध्वनिरुत्सवोऽभूत् ॥ ५४ ॥

स्वनगरीम्प्रति प्रस्थानम् ।

वृत्ते वधूमथ विवाहमहोत्सवे ताम्
आदाय निष्प्रतिमपौरुषवैजयन्तीम् ।
अन्वागतादरनिवर्तितपन्नगेन्द्रः
पर्युत्सुकः स्वनगरीं स नृपः प्रतस्थे ॥ ५५ ॥

गत्वाथ दूरमहिविष्टपतः सहेलम्
अंशः पुराणपुरुषस्य स निर्जगाम ।
शिप्रार्पितेन सहसा पुरतः प्रभाव-
सीमन्तिताम्बुपटलेन पथा ससैन्यः ॥ ५६ ॥

तस्याः स्वहस्तमुनिसंहतिकल्पितार्घः
सिन्धोस्तटे स पदमेकपदे चकार ।
शृङ्गे तदा च भगवानरविन्दबन्धुर्
बन्धूकपाटलरुचिः कनकाचलस्य ॥ ५७ ॥

उज्जयिनीप्रवेशः ।

बालातपच्छुरितहर्म्यविटङ्कवर्ति-
पारावतातिमधुरध्वनितच्छलेन ।

१. I. reads °शङ्ख-हुडुक्क-वंश° for °वंश-हुडुक्क-शंख° changed place only. २. I. reads °प्रतिघ° for °प्रतिम°. ३. B. reads अन्वासितादरविवर्तितपन्नगेन्द्रपर्युत्सुकः for अन्वागतादरनिवर्तितपन्नगेन्द्रः पर्युत्सुकः, but in the margin substitutes ग for सि. ४. I. reads स for स्व°. ५. B. reads प्रपेदे for प्रतस्थे, but in the margin प्रतस्थे. ६. I. reads अति° for अथ. ७. B. and I. read सिप्रा° for शिप्रा°. ८. B. and K. read सहर्ष° for स्वहस्त° and I. °कल्पितार्घसिन्धोस् for °कल्पितार्घः सिन्धोस्. ९. K. reads °सेकपदे for °मेकपदे. १०. K. reads °ध्वनिनाचितेन for °ध्वनितच्छलेन.

सम्भाषणं विदधतीमिव पौरमुक्त-
पुष्पाञ्जलिः स पुरमुज्जयिनीं विवेश ॥ ५८ ॥

कान्ता-यशोभटयुतं कृशतामवाप्तास्
तच्चिन्तयैव सचिवास्तमथ प्रणेमुः।
काकुत्स्थमाहतसुरारिमिवानुयान्तं
सौमित्रिणा जनकराजतनूजया च ॥ ५९ ॥

महाकालेश्वरदर्शनम्।

आनन्दबाष्पसलिलार्द्रदृशोऽर्धमार्गे
सम्भाष्य तान् स्मितमुखैः सह तैर्जगाम।
विद्याधरोरगकराहतहेमघण्टा-
टाङ्कारहारि भवनं त्रिपुरान्तकस्य ॥ ६० ॥

तस्मिंश्चराचरगुरोर्हरिणावचूल-
चूडामणेरुपचितिं विधिवद्विधाय।
साकं फणीन्द्रसुतयाऽम्बररोधिकम्बु-
तूर्यस्वनोर्मि स च राजकुलं विवेश ॥ ६१ ॥

धारागमनम्।

तत्रार्णवध्वनिघनोत्सवतूर्यघोषे
स्थित्वा दिनानि कतिचित् स नरेन्द्रचन्द्रः।
यातिस्म भूषितकुलः कुलराजधानीं
धाराममात्यकथितां मृगयेतिवृत्तः ॥ ६२ ॥

---

१. B. and K. read °बाष्पाञ्जलिः for °पुष्पाञ्जलिः. २. B. reads कृतितां for कृशतां. ३. B. °मायतसुरारि° for °माहतसुरारि°. ४. K. reads °यातं for °यान्तं. ५. I. reads स्वानन्द° for आनन्द°. ६. I. reads °दृशोऽथ मार्गे for °दृशोऽर्धमार्गे. ७. B. reads स्मितमुखान् for स्मितमुखैः; while K. and I. read सहितैर् for सह तैर्. ८. K. reads °घण्टं for °घण्टा°. ९. B. and K. read °रुपचितिं for °रुपचितिं. १०. B. reads °कथितां for °कथिता°.

उद्घाटितेष्वथ विलोकनकौतुकेन
वातायनेषु परितः पुरसुन्दरीभिः।
तस्मिंश्चिराद्विशति जीव इवेश्वरे सा
प्रोन्मीलितोरुनयनेव पुरी बभूव ॥ ६३ ॥

शिवलिङ्गप्रतिष्ठा।

तत् साध्वकारयदथाधिगतप्रतिष्ठं
तत्राच्छरत्नशिवलिङ्गमनर्घशीलः।
तस्य प्रभावघटितैश्च्यधुरर्हणां च
विद्याधरा विकचकल्पतरुप्रसूनैः ॥ ६४ ॥

अनुयायिप्रस्थानम्।

कृत्वा यथोचितमकृत्रिममुत्सवान्ते
सत्कारमायतनतिश्लथमौलिरत्नौ।
दत्ताङ्कपाणिरुभयोः प्रजिघाय सोऽथ
विद्याधराधिप-फणीन्द्रसुतौ स्वदेशम् ॥ ६५ ॥

एकस्तयोरगमदम्बरगामिसैन्य-
सीमन्तिताभ्रपटलः शशिकान्तशैलम्।
अन्योऽप्यगाधजलमालवजन्हुकन्या-
विश्राणितोरुसरणिर्निजराजधानीम् ॥ ६६ ॥

शशिप्रभासखीगमनम्।

मा ऽभूः कदापि विमुखी रमणे यदस्य
छन्दानुवृत्तिरतिसंवननं मदस्य।

---

१. B. reads उद्घातितेषु for उद्घाटितेषु and I. उद्घट्टितेषु for the same. २. B. reads पुरतः and T. सुर° for परितः and पुर° respectively. ३. I. substitutes यत् for तत्; while B. and K. read साऽध्वकारि यथा° for साध्वकारयदथा°. ४. I. reads दत्ताकपालि° for दत्ताङ्कपाणि° and सोथ for सोऽथ. ५. B. reads °शकलः for °पटलः. ६. I. reads माभूत् for माभूः. ७. I. reads °मतिसंवननं वदन्ति for °रतिसंवननं मदस्य; while B. °मति° for °रति° and यदस्य for मदस्य.

उक्त्वेति तामहिसुतामगमन् गृहाणि
गन्धर्व-किन्नर-महोरग-सिद्धकन्याः ॥ ६७ ॥

साम्राज्यलक्ष्मीस्वीकारः ।

नीलच्छत्रावतंसा भुजगपतिसुतापाण्डुगण्डस्थलान्तः-
कस्तूरीपङ्कपत्रव्यतिकरशबलव्यायतांसे सलीलम् ।
देवेनाथ स्वमन्त्रिप्रवरचिरधृता साहसाङ्केन दीर्घे
रोहज्ज्याघातरेखे पुनरपि निदधे दोष्णि साम्राज्यलक्ष्मीः ॥ ६८ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभालाभोनामाऽष्टादशः सर्गः समाप्तः ॥ १८ ॥ श्रीः ॥

---

१. I. reads ताः फणिसुतां for तामहिसुतां. २. B. and K. read रोह° for रोहत्°. ३. B. reads विदधे for निदधे. ४. I. reads इति परिमलस्य नवसाहसाङ्कचरिते शशिप्रभालाभोऽष्टादशः सर्गः.

# अथ ग्रन्थप्रशस्तिः ।



श्रीमत्कविप्रियसुहृ[1]च्छलदङ्कराम-
राजेन्दुभक्त्यधिगतप्रतिभाविशेषः ।
एतद्विनिद्रकुमुदद्युति पद्मगुप्तः
श्रीसिन्धुराजनृपतेश्चरितं बबन्ध ॥ १ ॥

लक्ष्मीलतानववसन्त महीतलेन्द्र
विद्याविलासमणिदर्पण सिन्धु[2]राज ।
एतन्मया घटितमुज्ज्वलकान्ति का[3]व्य-
माणिक्यकुण्डलमिह[4] श्रवणे विधेहि ॥ २ ॥

न्यस्तानि यानि मयि सूक्तिसुधापृषन्ति
[5]देवेन तेन कतिचित् कविबान्धवेन ।
चन्द्रातपस्नपितमौक्तिकसोदराणां
तेषामिदं विलसितं नवसाहसाङ्क[6] ॥ ३ ॥

[7]यच्चापलं किमपि मन्दधिया मयैवम्
आसूत्रितं नरपते नवसाहसाङ्क ।

---

१. I. reads °सुहृदच्छल° for °सुहृच्छल°; while B. substitutes °पङ्कनाम° for °दङ्कराम°. २. B. reads सिन्धुराजः for सिन्धुराज°. ३. B. reads काव्यं and K. °काव्यं for काव्य.° ४. B. and K. read °मिव for °मिह; while K. substitutes निधेहि for विधेहि. ५. B. reads दैवेन for देवेन. ६. B. reads °साहसाङ्कः for °साहसाङ्क. ७. I. reads यः for यत्:

आज्ञैव हेतुरिह ते शयनीकृतोग्र-[1]
राजन्यमौलिकुसुमा न कवित्वदर्पः[2] ॥ ४ ॥

---

इति[3] नवसाहसाङ्कचरितं सम्पूर्णम् ।



---

१. B. has शयनीकृतराजन्य° omitting one letter. २. B. reads विप्रदर्पः for कवित्वदर्पः. ३. I. has परिपूर्णं नवसाहसाङ्कचरितं कृतिः कवेः परिमलस्य.

# INDEX.



## अ.

## उ.

ऊ.



ऋ.



ए.

## क.

ग.

छ.



ज.

द.

## ध.

न.

म.

13

व

## श.

## ह.

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr. P. Peterson and Dr. R. G. Bhândârkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. G. Bühler ... ... ... ... ... ... ... | 0 | 4 | 0 |
| No. II.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. F. Kielhorn. The Sanskrit Text and various Readings, Part I.... ... ... ... ... | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. G. Bühler ... ... ... ... ... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn. (In the press.) | | | |
| No. V.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part I., Cantos I.—VI. (In the press.) | | | |
| o. VI.—Mâlavikâgnimitra: a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... | 2 | 2 | 0 |
| o. VII.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII.... ... | 0 | 8 | 0 |
| o. VIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part II., Cantos VII.—XIII. | 0 | 12 | 0 |
| o. IX.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX.. | 0 | 8 | 0 |
| o. X.—The Daśakumâracharita of Daṇḍin. Part I. Edited, with Critical and Explanatory Notes, by Dr. G. Bühler ... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| o. XI.—The Nîtiśataka and Vairâgyaśataka of Bhartṛihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M.A. (Copies not available.) | | | |
| o. XII.—Nâgojibhaṭṭa's Paribhâshenduśekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ... | 0 | 8 | 0 |
| o. XIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part III., Cantos XIV.—XIX. | 0 | 8 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XIV.—Vikramâṅkadeva-Charita. Life of king Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler. (Copies not available.) | | | |
| No. XV.—Mâlatî-Mâdhava: a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhandarkar, M.A. (Second Edition in the Press.) | | | |
| No. XVI.—Vikramorvaśî: a Drama by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. (Under revision.) | | | |
| No. XVII.—Hemachandra's Deśînâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler, Part I. Text and Critical Notes by Professor Pischel. | 1 | 0 | 0 |
| No. XVIII.—Vyâkaraṇa-Mahâbhâshyá of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. complete. Parts I., II. and III. ... ... | 9 | 0 | 0 |
| No. XIX. Ditto ditto by ditto. Vol. I. Part II. | 1 | 0 | 0 |
| No. XX. Ditto ditto by ditto. Vol. I. Part III. | 1 | 0 | 0 |
| No. XXI. Ditto ditto by ditto. Vol. II. Part I. | 1 | 0 | 0 |
| No. XXII. Ditto ditto by ditto. Vol. II. Part II. | 1 | 0 | 0 |
| No. XXIII. Vâsishṭhadharmaśâstram. Edited, with Notes, by Dr. A. A. Führer ... ... ... ... ... | 0 | 8 | 0 |
| No. XXIV.—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson. (Copies not available.) | | | |
| Do. Vol. II. Introduction and Notes, by do. ... | 2 | 0 | 0 |
| No. XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kathavaté. (Copies not available.) | | | |
| No. XXVI.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. II. Part III. ... | 1 | 0 | 0 |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhuṇḍhirâja. Edited, with Notes, by K. T. Telang. (Copies not available.) | | | |
| No. XXVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. III. Part I. ... | 1 | 0 | 0 |
| No. XXIX.—Do. do. of do. by do. Vol. III. Part II. | 1 | 0 | 0 |
| No. XXX.—Ditto do. of do. by do. Vol. III. Part III. | 1 | 0 | 0 |
| No. XXXI.—Subhâshitâvali of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgâprasâd ... | 2 | 8 | 0 |
| No. XXXII.—Tarka-Kaumudî of Laugâkshi Bhâskara. Edited by Professor M. N. Dvivedi ... ... ... | 0 | 12 | 0 |
| No. XXXIII.—Hitopadeśa of Nârâyaṇa. Edited by Dr. P. Peterson... ... ... ... ... ... ... ... | 0 | 14 | 0 |
| No. XXXIV.—The Gauḍavaho, by Vâkpati. Edited by Shankar P. Pandit ... .. ... ... ... ... | 3 | 0 | 0 |

ny

| | Rs. | a. | p. |
|---|---|---|---|
| No. XXXV.—Mahânârâyaṇa Upanishad. Edited by Colonel G. A. Jacob ... ... ... ... ... ... ... | 0 | 7 | 0 |
| No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson ... ... ... | 4 | 0 | 0 |
| No. XXXVII.—Śârṅgadharapaddhati. Edited by Dr. P. Peterson. Vol. I.... ... ... ... ... ... ... | 3 | 0 | 0 |
| No. XXXVIII.—Naishakarmyasiddhi. Edited by Col. G. A. Jacob ... ... ... ... ... ... ... ... | 2 | 0 | 0 |
| No. XXXIX.—A Concordance to the principal Upanishads and Bhagvadgîtâ, by the same author ... ... | 8 | 0 | 0 |
| No. XL.—Eleven Atharvaṇa Upanishads, with Dîpîkâs, by the same author ... ... ... ... ... ... ... | 2 | 8 | 0 |
| No. XLI.—Handbook to the Study of the Ṛigveda, by Dr. P. Peterson. Part I. ... ... ... ... ... | 3 | 0 | 0 |
| No. XLII.—The Daśakumaracharita of Daṇḍin, Part II. (completing Dr. Bühler's Edition). Edited with Critical and Explanatory Notes by Dr. P. Peterson | 0 | 8 | 0 |
| No. XLIII.—Handbook to the Study of the Rigveda, by Dr. P. Peterson. Part II. comprising the Seventh Maṇḍala with the Commentary of Sâyaṇa... | 5 | 0 | 0 |
| No. XLIV.—Aphorisms of the Sacred Law of the Hindus, an Index of the Sutras and the various Readings of the Hiraṇyakeshî-Dharmasûtra, by Dr. G. Bühler. Part I. ... ... ... ... ... ... ... | 2 | 12 | 0 |
| No. XLV.—Râjataranginî. Edited by Pandit Durgâprasâd, Part I. containing the first 7 (seven) Taraṅgas .. ... ... ... ... ... ... ... ... ... | 3 | 0 | 0 |
| No. XLVI.—Patañjali's Yogasûtras. Edited with the Scholium of Vyâsa and the Commentary of Vâchaspati, by Mahâmahopâdhayâya Râjârâm Shâstrî Bodas. | 3 | 4 | 0 |
| No. XLVII.—Pârâśara Dharma Saṁhitâ with the Commentary of Sâyana Mâdhavâcharya, Vol. I. Part I. Edited by Pandit Vâman Shâstrî Islâmpurkar ... | 4 | 4 | 0 |
| No. XLVIII.—Ditto do. of do. by do. Vol. I. Part II. | 4 | 0 | 0 |
| No. XLIX.—Nyâyakośa. 2nd Edition. Edited by Mahâmahopâdhyâya Bhîmâchârya Zaḷkîkar ... ... ... | 12 | 0 | 0 |
| No. L.—Âpastamba Dharmasûtra, Part II. Edited by Dr. G. Bühler ... ... ... ... ... ... ... ... ... | 1 | 8 | 0 |
| No. LI.—Râjataraṅgiṇî. Edited by Pandit Durgâprasâd, Vol. II. Taraṅgas VIII.... ... ... ... ... ... | 2 | 8 | 0 |
| No. LII.—Mrichchakatika, Part I. Edited with two commentaries and various readings by Mr. N. B. Godbole. | 3 | 8 | 0 |

